

नमः श्रीपरमात्मने ।

# आदर्श-प्रस्ताव-रत्नमाला ।

## प्रस्तावना

प्रस्तावो नाम नायं नवीनोऽभूतपूर्वः कश्चित्पदार्थः । भाषायाः प्रादुर्भावेन सहैवास्यापि भवति प्रादुर्भावः । वस्तुतो भाषायाः परिपूर्णः सदुपयोगश्चारितार्थ्यं वा भवति प्रस्तावे एव । कस्यापि विवक्षितस्य विधेयस्य निषेध्यस्य वा विषयस्य प्रतिपादनायैव प्रवर्तते खलु कापि भाषा । न शक्यते ऊहापोह-समर्थनोपपत्त्यादिभिर्विना कोऽपि विषयो विधातुं निषेद्धुं वा । महत्यो दीर्घाः कथाः; विशालानि वर्णनानि; गहना दार्शनिक्यो विवेचनाश्चेति सर्वमिदमत्रैवोपयुज्यते । सूक्ष्मेक्षिकया पर्यालोचनेन ज्ञायते यत्—सर्वप्रथमं वेदेष्वेव जातः प्रस्तावस्य श्रीगणेशः तत्र हि विविधविधाः प्राप्यन्ते प्रस्तावाः—परिचयात्मका वर्णनात्मका विवरणात्मका विवेचनात्मकाश्चापि । ऋग्वेदे तावद् उषसः सम्बन्धीनि समुपलभ्यन्ते कतिपयानि सूक्तानि येषु परममनोहरयाऽऽलङ्कारिक्या भाषया कृतो विद्यते वर्णनमुषसः, तत्त्वं च तस्याः सम्पूर्णमपि विशकलितम्, अयमस्ति—उषोविषयको विशालः परमरमणीयो वैदिकः प्रस्तावः । यजुर्वेदीयपुरुषसूक्ते च विराट्-पुरुषवर्णनात्मकः परिमार्जित-साहित्यिक-भाषोपनिबद्धो रमणीयतरः प्रबन्धः । एवं देवता-मनुष्य-गवाश्वादिपशु-यज्ञ-कृषि-धर्म-सत्याऽहिंसाऽस्तेयादि-विविधाधिभौतिकाऽऽध्यात्मिकाऽऽधिदैविकादिविषयाः समुपलभ्यन्ते प्रस्तावाः सर्वत्र वेदेषु । किम्बहुना जीवनचरितात्मकाः ( इतिहासात्मकाः ) अपि

प्रस्तावस्य क्रमिक इतिहासः ।

वैदिकाः प्रस्तावाः ।

प्रस्तावाः प्राप्यन्ते तत्र, येषां संक्षिप्ताः सङ्केता मन्त्रेषु विस्तृतानि च वर्णनानि सन्ति ब्राह्मणग्रन्थेषु । ( अनित्यत्वप्रसङ्गान्नास्ति-इतिहासो वेदे इति भिन्नः खलु प्रश्नः; इतिहासमयत्वेऽपि न वेदानामनित्यत्वमिति युक्ति-प्रयुक्तिपुरस्सरं समाधानं चापि कुर्वते इतरे ) ।

उपनिषत्सु तु प्रत्यक्षत एव प्राप्यन्ते गम्भीरविवेचनात्मका रमणीयतरकथोपनिबद्धा अध्यात्मविषयकाः प्रस्तावाः । कठोपनिषदि नाचिकेतोपाख्यानं यत्रात्मतत्त्वस्य वैराग्योपशमादिसाधनपूर्विका विद्यते गम्भीरा विवेचना । उपनिषदन्तरेषु च सृष्टितत्त्वाऽऽत्मतत्त्व-मृत्युतत्त्व-जीवनतत्त्व-परब्रह्मतत्त्वादि-विषयकास्तत्तदुपासनाविषयकाश्च शतशः सन्ति प्रस्तावाः ।

श्रौतस्मार्तसूत्रेषु धर्माचारविषयकाः, दर्शनेषु चाधिभौतिकाऽऽध्यात्मिकाऽऽधिदैविकतत्त्वविषयकाः प्रस्तावा वैज्ञानिक-विधया विद्यन्ते प्रतिपादिताः, तथा पुराणेतिहासग्रन्थेषु रामायण-महाभारतादिषु मित्रसम्मितोपदेशभाषयोपनिबद्धा धर्म-धैर्य—सत्य—भगवद्भक्ति—ब्रह्मचर्य—सदाचार—परोपकार—सेवा—दया—ऽहिंसा—पारस्परिकसहानुभूत्यादिविषयकाः प्रसङ्गाः सन्ति सहस्रशः प्रस्तावा एव । वेदानारभ्य प्रचलितेयं प्रस्तावपद्धतिः कान्तासम्मितोपदेशरूपेषु रमणीयार्थप्रतिपादक-शब्दात्मकेषु काव्येषु समागत्यालङ्कृता परमपरिष्कृता च समपद्यत । सूर्यवर्णनं, चन्द्रवर्णनम् , ऋतुवर्णनं, नगरीवर्णनं, शैलवर्णनम् , अटवीवर्णनम् , नदीवर्णनं स्त्री-बाल-वृद्ध-पुरुषादिस्वभाववर्णनम् , यौवन—सौन्दर्य—पारस्परिकप्रेमवर्णनं चरित्रवर्णनं चेति सर्वाण्यपीमानि सन्ति प्रस्तावस्यैव रूपान्तराणि । विशालया दृशाऽवलोकने तु सर्वे ग्रन्थाश्चापि तत्तद्विषयका बृहदाकाराः सन्ति प्रस्तावा एव, अत एव च ग्रन्थशब्दस्य पर्यायभूताः खलु प्रयुज्यन्ते निबन्ध-प्रबन्धादिशब्दाः, प्रस्तावो निबन्धः प्रबन्ध इति च नार्थान्तरम् ।

मध्यमकालिकाः प्रस्तावाः, दार्शनिकाः, पौराणिकाः, आलङ्कारिकाश्च । लघुकथात्मकाश्चापि ।

अनन्तरं समागतः सोऽपि समयो यत्र प्रारम्भिक-शिक्षार्थिजन-मनोविनोदमावहन्तीभिः सरलातिसरलाभिर्लघुलघुकथाभिस्ते ते प्रस्तोतव्यविषया

विशकलिता अक्रियन्त, एतज्जातीयकाश्च प्रस्तावाः कथासरित्सागर-पञ्चतन्त्र-हितोपदेशादिपुस्तकेषु समुपलभ्यन्ते यथा—

"यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ॥"

अत्र प्रस्तोतव्यविषयो बुद्धिः, स च भासुरकसिंहकथया साधु समर्थितः अन्ते उपसंहृतश्च—"अतोऽहं ब्रवीमि—"यस्य बुद्धिर्बलं तस्ये" ति । एतेषु लघुकलेवराभिः कथाभिरेव समर्थितो भवति स्म प्रस्तोतव्यो विषयः, नासीदावश्यकता तदानीं युक्ति-प्रयुक्तिभिरूहापोहैश्च तत्परिपुष्टेः ।

इदंयुगीना प्राथमिकी प्रस्तावशैली ।

अथ साम्प्रतं प्रचलिता परीक्षापरिपाटी, यत्र प्रस्तावोऽपि नियतीकृत एकः परीक्षणीयो विषयः । विशेषतश्चोच्चपरीक्षासु योग्यतापरीक्षणं भाषाधिकारपरीक्षणं रचनाकौशलपरीक्षणं सर्वतोमुखविसारि-ज्ञानपरीक्षणं च कर्तुमारभ्यताऽनेनैव । परीक्षायां खलु होरात्रयात्मक एव काले कमपि शास्त्रीयं लौकिकं वा विषयमधिकृत्य लेखनीयो भवति प्रस्तावः । पञ्चाम्बुविश्वविद्यालयीय-शास्त्रिपरीक्षायां प्रथमतः संसारवर्णनपुरस्सरं विषयमापात्य किञ्चिद् विशकलनं कृत्वा दृष्टान्ते कस्यापि महीपतेरन्यस्य वा प्रसङ्गमाक्षिप्य तद्वर्णन एव समाप्यते स्म प्रकृतो निबन्धः, इत्यासीत्तदानींतनी प्रस्तावलेखनपरिपाटी ।

अथ परिवर्तिता शैली, जातं संशोधनं, सम्पन्नो विकासः, त्यक्त आदौ संसारवर्णनमयः क्लेशः, एकस्यैव दृष्टान्तस्याधिकविस्तरेण वर्णनं वृथा जातम् । प्रतिज्ञोपपत्ति-निदर्शनोपसंहारपरिपाट्या लेखितुमारभ्यन्त प्रस्तावाः, प्रतिज्ञादीनां च स्वशब्दैरितरैर्वा तद्व्यञ्जकैर्निर्देश आवश्यकोऽजायत । एतस्मिन्नेव समये १९१८ ख्रीष्टवत्सरे प्रस्तावविषयकः परीक्षोपयोगी पञ्चनदेषु सर्वप्रथमो ग्रन्थः स्वर्गीय-श्री पं॰ रामचन्द्रशास्त्रिणा कुशलेन सङ्कलय्य प्रकाशितः "प्रस्तावप्रभाकरो" नाम । अभूच्च तेन प्रस्ताव-शिक्षार्थिनां भूयानुपकारः । अनन्तरं च स्वर्गीय-श्री पं॰ नृसिंहदेवशास्त्रिणा दर्शनाचार्येण

वर्तमाना उपयोगिनो ग्रन्थाः परिमार्जिता प्रस्तावपरिपाटी च ।

प्राकाश्यत प्रौढरचनामयी पूर्वोक्तप्रस्तावपरिपाटीमध्येव प्रस्तावचन्द्रिका नाम, तयाप्यलभन्त लाभं भूयांसो विद्यार्थिनः। अपि चानेकभाषाविद्वान् स्व० श्री पं० साधुराम शास्त्री (एम्. ए. एम्. ओ. एल्) भाषान्तरप्रस्तावशैलीः पर्य्यालोच्य संस्कृतप्रस्तावशैलीमपि सम्यग् निध्याय समुपनिबद्धवान् प्रबन्ध-पथप्रदर्शकं नाम परीक्षोपयोगि रमणीयं पुस्तकम्, पुस्तकेऽस्मिन् प्रथम-परिच्छेदे साधुपर्यालोचिता प्रस्तावनिर्माणपरिपाटी। इतरप्रान्तेषु चाप्ये-तद्विषयकाः समुपलभ्यन्ते प्राकाश्यमानीताः कतिपये उपयोगिनो ग्रन्थाः, तेषु वङ्गप्रान्तीया रचनानुवादशिक्षा प्रबन्ध-कल्प-लतिका च, युक्तप्रान्तीया निबन्धचन्द्रिका-संस्कृतप्रबन्धरत्नाकर-प्रबन्धप्रकाशादयश्च।

भाषान्तरेषु चैष निबन्धरचनाप्रकारः साम्प्रतं परमसुन्दर-परिमार्जित-रूपे दृष्टिपथमवतरति, विषयेऽस्मिन् हिन्दीभाषया आंग्लभाषातो बहु शिक्षितम्; तेन हिन्दीभाषायां निबन्ध-रचनाऽपि-परिष्कृता रमणीयतरा च संवृत्ता। संस्कृत-भाषायाः सविधे तु महानस्ति स्वकीय एव सुरक्षितो निधिः, केवलं तस्याऽऽविष्करणमेवापेक्ष्यते। उपयुक्तांशे भाषान्तरीया शैली चाश्रयणीया; भविष्यति सुवर्णे सुगन्धसंयोगः। साम्प्रतिकाः प्रस्तावपरी-क्षकाश्चापि नवीनां परिपाटीमेवाद्रियन्ते सारल्यं सत्कुर्वन्ति, भाषान्तरपरि-चितास्ते वाञ्छन्ति तादृशमेव प्रकारं प्रास्ताविकं संस्कृतपरीक्षार्थिनामपि। एवं सर्वथा पर्यालोचनीयतामापन्नोऽयं विषयः—"का नाम साम्प्रतिकी प्रस्तावपरिभाषा, कतिभेदश्च सः, का च तस्य सामग्री, कियन्ति च तस्या-ङ्गानि, कथं लेख्यः, कीदृशी तस्य भाषाशैली चाश्रयणीया, प्राचीनया नवीनया वा कया प्रवर्तितव्यम्" इत्यादि सर्वेषामपि विषयाणां विज्ञानं प्रस्तावलेखने परमावश्यकमिति तद्बोधनाय क्रियते साम्प्रतं प्रयासः—

## प्रस्ताव-परिभाषा।

अनन्ताः खलु प्रस्तोतव्यविषयाः, साधारणात् साधारणतराः, विशि-ष्टाद् विशिष्टतराश्चापि। तुच्छात्तुच्छतरं तृणगुल्माद्यपि कदाचित् प्रस्तोतव्यं भवितुमर्हति, सच्चिदानन्दघनः परब्रह्मपरमात्माऽपि भवति प्रस्तोतव्यः कदापि, एवं ब्रह्मादिस्तम्बपर्यन्तं समस्तमपि वस्तुजातं जायते प्रस्तोतव्यो विषयः। प्रस्तोतव्यविषयभेदाच्च प्रस्तावा अपि भवन्ति भिन्नभिन्ना

एव, दृश्यताम्—नद-नदी-नगर-ग्राम-प्रान्त-देशादिपरिचयात्मकप्रस्तावेषु न भवत्यावश्यकता ऊहापोहानां प्रतिज्ञोपपत्त्यादीनां च । जीवनचरितात्मकेषु च भवति भिन्नविध एव लेखनप्रकारः । शास्त्रीयेषु च प्रस्तावेषु ऊहापोहक्रमो जायतेऽनिवार्यः । एवं विवेचनात्मकेषु प्रस्तावेषु च प्रतित्वं नास्ति एकविध एव प्रकारः—क्वचित्समालोचनैव भवति करणीया, क्वचित्किञ्चिद् विधीयते, क्वचित्किञ्चिद् निषिध्यते, सामाजिकदशा-प्रचलित-कुप्रथादिविषयेषु च प्रस्तावेषु गुणदोषादिप्रदर्शनम् कुप्रथादिनिवारणाय समुचितोपायानां निर्देशश्च प्रतिपाद्यतामापद्यते, उद्बोधनम्, प्रबोधनं नवीना योजनाश्चापि प्रदर्श्यन्ते । नैतिकेषु विषयेषु पर्यालोचना–समालोचना–विवेचनादिकं न जाने किं-किमापद्यते लेखनीयताम् । एवम् अत्यन्तविजातीयेषु अनन्तेषु प्रस्तोतव्यविषयेषु प्रस्तावानामप्यानन्त्यं स्वाभाविकमेवेति, "कोऽसौ सर्वानुगतो धर्मो यस्य लक्षणत्वमुच्येत, का च सा सर्वाङ्गीणा परिभाषा क्रियेत या स्यात्सर्वानुगता" इति गम्भीरतर-विचारपरायणा वयं संस्कृत-संस्कृतेतर–भाषानिबन्धतत्त्वज्ञैः प्रास्ताविकैः संवदन्तोऽन्ते इदमेव निश्चिनुमः—

(१) कमप्येकं विषयमधिकृत्याऽनुज्झितार्थसम्बन्ध-वाक्यकदम्बरचना प्रस्तावः।

(२) विषयं कमप्येकं केन्द्रीकृत्य क्रमबद्धया परिमार्जितसुबोधया भाषया स्वतन्त्ररूपेण स्वकीयभावानामाविष्करणं प्रस्तावः ।

(३) कस्मिँश्चिदपि विषये सुन्दर-सुललित-सुबोधभाषया स्वकीयस्य बाह्यज्ञानस्याऽऽन्तरिकभावानां च परिचयप्रदानं प्रस्तावः ।

## परिभाषासारः ।

लक्षणत्रितयेऽप्येतस्मिन् यत्किञ्चिदन्तरेण तत्त्वमेकमेव प्रतिपादितम्, यस्येदमस्ति तात्पर्यम्—प्रस्तावे करणीयो भवति कस्यापि विषयस्य सर्वतोभद्रं प्रतिपादनम्, तस्य सर्वप्रथमं साधनं "भाषा", इति भाषा सा सरला सुबोधा ललिता स्याद्, रचना चाऽनुज्झितार्थसम्बन्धा, प्रतिपादनं चापि तत्कुत्रचिदूहापोहैः क्वचित्प्रतिज्ञोपपत्त्यादिभिः क्वचिद् विचारपरम्परयैवेति कथमपि स्यात् प्रस्तावे प्रस्तोतव्यस्य विषयस्य सुचारु सर्वतोमुखीनं शब्दमयं

चित्रमिव चित्रितं क्रियेत, भवेच्च प्रतिफलिता यत्र स्वकीयस्वतन्त्रविचार-धारापि; इदमुच्यते प्रस्तावो रचना निबन्धः प्रबन्धो वेति ।

## प्रस्ताव-भेदाः

आंग्लभाषापरिचितैर्हिन्दीभाषापण्डितैर्बहुपर्य्यालोच्य विषयभेदेन रचनाभेदेन चानन्तविधा अपि प्रस्तावा गणत्रये विभज्य नियमिताः—(१) वर्णनात्मकाः, (२) विवरणात्मकाः, (३) विवेचनात्मकाश्चेति । पशु-पक्षि-नदी-पर्वतादि-प्राकृतिक-दृश्यानां विद्यालयादि-संस्थानां यान्त्रिक-कार्यालयादीनां च प्रायो वर्तमानानामेव विषयाणां क्रमबद्ध-परिचय-प्रदानात्मकानि वर्णनानि "वर्णनात्मकाः" प्रस्तावाः । प्रायो भूतकालिका ऐतिहासिक्यो घटना जीवनचरितानि यात्रादिवर्णनानि च "विवरणात्मकाः" प्रस्तावाः । आध्यात्मिक-सामाजिक-राजनैतिक-धार्मिकाचारादिविषयकाश्च प्रस्तावाः सन्ति "विवेचनात्मकाः" इति । भेदत्रयमेतत्सर्वसाधारणप्रस्ताव-रचनार्थिनां परमोपयोगि सूक्ष्मविचार-निकष-परीक्षितं चेति नास्ति कश्चिद् विसंवादः, संस्कृते प्रस्तावरचनाकर्तृणामपि परमोपादेयमेव । किन्तु संस्कृत-परीक्षार्थिनां विद्यार्थिनां प्रस्तावशिक्षणसौष्ठवाय निरुक्तप्रस्ताव-भेदपरिपाटीतः भिन्नाऽप्येका भेदपरिपाटी परमोपयुक्ता भवितुमर्हति—

प्रस्तावाः प्रथमतो द्विविधाः, तद्यथा- (१) "शास्त्रीयाः" (२) "लौकिकाः"श्चेति तत्र शास्त्रीयं कमप्येकं विषयमधिकृत्य निबध्यमानाः "शास्त्रीयाः" यथा—द्रव्यगुणादि-पदार्थलक्षण-भेदविशेष-परीक्षणादिविषयकाः प्रस्तावा वैशेषिकशास्त्रीयाः । शब्दाऽनित्यत्व—परमाणुकारणत्वेश्वरकर्तृकत्वादि-विषया न्यायशास्त्रीयाः । सत्कार्यवाद—प्रकृतिकर्तृत्व—सत्त्वपुरुषान्यताख्याति-साधनकैकान्तिकाऽत्यन्तिक - दुःखत्रयनिरासादिविषयाः साङ्ख्यशास्त्रीयाः । अष्टाङ्गयोगमनोनिरोध—चित्तप्रसादन—क्रियायोग—कैवल्यादिविषयका योगशास्त्रीयाः । वेदाऽपौरुषेयत्व—देवतातत्त्व—याज्ञिकविचारादिविषयका मीमांसाशास्त्रीयाः । जगन्मिथ्यात्व—ब्रह्माद्वैत—विवर्तवादादिविषयकाश्च प्रस्तावा वेदान्तशास्त्रीयाः । एते चैव "दार्शनिकाः प्रस्तावाः" कथयितुं शक्यन्ते । एवं वैदिकम् औपनिषदं वैयाकरणं धर्मशास्त्रीयम्

शास्त्रीयाः प्रस्तावाः

आयुर्वैदिकम् अलङ्कारशास्त्रीयं (काव्यरसालङ्कारादिकम्) इतरशास्त्रीयं वा तत्त्वं किमप्येकं केन्द्रीकृत्य निबध्यन्ते शास्त्रीयाः प्रस्तावाः । एतेषु गम्भीरा गवेषणा विवेचना च करणीया भवति, प्रदर्शनीयौ च भवतः पूर्वोत्तरपक्षौ, अन्ते निर्णयश्चापि । पूर्णतया तत्तच्छास्त्रनिष्णातैरेव शास्त्रीय-प्रस्तावेषु प्रवर्तनीयम्, नायं पल्लवग्राहिपाण्डित्यानां साधारणज्ञानवतां सेवनीयः पन्थाः ।

लौकिकास्तावत् त्रिधा विभज्यन्ते —

**(१) परिचयात्मकाः । (२) चरितात्मकाः । (३) विवेचनात्मकाश्चेति ।**

( १ ) **तत्र परिचयात्मकाः**=साधारणवर्णनात्मकाः । एषु खलु नदी-पर्वतादिप्राकृतिकदृश्यानां प्रान्त-देश-नगर-ग्रामादीनां विद्यालयादिसंस्थानां, मेला-महोत्सवादीनां जातीय-राष्ट्रीयादिसम्मेलनानां, व्रतोत्सवादीनां च
क्रियते वर्णनं परिचयप्रदानात्मकम्, ऐतिहासिकघटनानां
परिचयात्मकाः यात्रादिवर्णनानां चापि समावेशं भेदेऽस्मिन्नेव मन्यामहे
प्रस्तावाः । वयम्, विवरणात्मकप्रस्तावस्थाने च केवलं चरितात्मक-
प्रस्तावानेवोपस्थापयिष्यामः ) । प्रथमतः प्रस्तावशिक्षणे
प्रवृत्तानां विद्यार्थिनां कृते समालम्बनीयोऽयमेव प्रकारः । एतेषां को नाम किंक्रमिकश्च लेखनप्रकार इति विशेषतस्तु तत्तत्प्रस्तावे स्फुटीभविष्यत्येव, साधारणतश्चात्र निर्दिश्यते—

**नदीवर्णने—**

(१) कुतः प्रादुर्भावः, कुत्र च विलयः ।
(२) तटवर्तीनि नगराणि व्यापारोपयोगाश्च ।
(३) तस्या धार्मिकं महत्त्वम्, जलादीनां वैज्ञानिकं महत्त्वादि ।
(४) ततः कुल्याप्रवर्तनम्, भूमिसेचनाद्युपयोगः इत्यादि ।

**नगरवर्णने—**

(१) कस्मिन् देशे प्रान्ते नदीतीरे चास्यावस्थितिः ।
(२) नामकरणे कारणम्, जनसङ्ख्या ।

(३) राजमार्गाऽऽपणपथ-रथ्या-महाभवनादिवर्णनम् ।
(४) दर्शनीयानि, प्रसिद्धं च तत्रत्यं किम् ।
(५) के च तत्र भवन्ति महोत्सवा मेला वा इत्यादि ।

**संस्थावर्णने—**

(१) संस्था नाम, अवस्थितिस्थानम् ।
(२) स्थापनकालः, संस्थापकपरिचयश्च ।
(३) तद्भवनवर्णनं, कर्मचारिणां परिचितिः ।
(४) विद्यालयश्चेद्-अध्यापनं, श्रेणयः, छात्रसङ्ख्या, तदाचार्यविशेष-परिचयश्च
(५) प्रबन्धः, परीक्षापरिणामाश्च ।
(६) छात्राणां धार्मिकं नैतिकं च जीवनम् ।
(७) भावि शुभाशंसनम् इत्यादि ।

**मेला-महोत्सवादिवर्णने—**

(१) कुत्र कदा भवति, कस्माच्च कालात्प्रवृत्तः ।
(२) कया जात्या कया चैतिहासिक्या घटनयाऽस्य सम्बन्धः ।
(३) किं किं चात्र भवति, वैज्ञानिकं व्यावहारिकं च किं तत्र रहस्यम् ।
(४) काश्च तत्र कुतः कुप्रथाः प्रचलिताः कथं च क्रियेत निरोधस्तासां, काश्च तत्स्थाने सुप्रथाश्चालनीयाः ।
(५) देशान्तरेषु तस्य किं किमस्ति स्वरूपम् ।

**( २ ) जीवनचरितात्मकाश्च**—प्रस्तावाः कस्यापि महापुरुषस्य जीवतो दिवंगतस्य वा जीवनकालिकमितिवृत्तमाश्रित्य जीवनचरितात्मिकाः प्रवर्त्यन्ते । एष च भेदो हिन्द्यादिभाषा-प्रास्ताविकैः प्रस्तावाः विवरणात्मकप्रस्तावेषु न्यस्तो यात्रादिप्रस्तावाँश्चापि भेदेऽस्मिन्नेव समावेशयन्ति ते । यात्रादिप्रस्तावान् पूर्वस्मिन्नेव भेदे समावेशयन्तो वयं शुद्धमिमं भेदं चरितात्मकमेवाचक्ष्महे, न्याय्याऽन्याय्यत्व-विवेचनं चात्र तद्भेदविचक्षणा एव कुर्युरिति । अयमत्र चरितात्मकप्रस्तावेषु भवति लेखनक्रमः—

( १ ) प्रसङ्गापाताद्नन्तरं चरितनायकाविर्भावकालिकी देशधर्मादि-परिस्थितिः।

( २ ) चरितनायकस्य कुलजन्मस्थानादिपरिचयः।

( ३ ) आविर्भावकालो वर्षमासतिथ्यादिरूपः।

( ४ ) पालनपोषणविद्योपार्जनादि।

( ५ ) विवाहः कार्यक्षेत्रम्, सन्तानादिवर्णनं च।

( ६ ) जीवनस्य विशिष्टा घटनाः, का च विशिष्टा घटनाऽऽदर्शपथा-वलम्बनकारणम्।

( ७ ) विशिष्टानि-उपकारकार्याणि।

( ८ ) गुणाः, मानः, प्रतिष्ठा च।

( ९ ) नैतिकं धार्मिकं च वैशिष्ट्यम, स्वभावश्च।

( १० ) परलोकगमनम् ( दिवंगतस्य चेत् ) इत्यादि।

( ३ ) तृतीयश्च भेदः, **विवेचनात्मकाः** प्रस्तावाः एतेषु कस्यापि विषयस्य गुणदोषादिविवेचनपुरःसरं पूर्वापरविशकलनविधया प्रवर्त्यते विचारः। एते एव च प्रस्तावाः संस्कृतपरीक्षार्थिनां कृते विशेषमहत्त्वशालिनः सन्ति। इमे च विषयभेदेनाऽनेकविधा इति लेखनपरिपाट्यपि एतेषां नास्त्येकविधा, परं साधारणतया विवेचनात्मकप्रस्तावेषु प्रतिज्ञोपपत्ति-दृष्टान्तोपसंहारक्रमेणैव प्रवर्त्तन्ते प्रायः सर्वेऽपि लेखकाः, यद्यपि शास्त्रीय-प्रस्तावा अपि सन्ति विवेचनात्मका एव तथापि

विवेचनात्मका प्रस्तावाः। तेषां शास्त्रीयवस्तुविषयत्वेन गम्भीरतर-गवेषणापूर्ण-तया प्रतिपादनशैलीभेदेन पृथग् निर्देशो व्यधायि।

सामाजिका नैतिका धार्मिकास्तथा वर्तमानपरिस्थितिविषयका आन्दोलनात्मका देशविदेशचर्चात्मका जातिभाषा-वेशभूषादिविषयकाश्च सर्वेऽपि निबन्धा भेदेऽस्मिन् विवेचनात्मके एवान्तर्भवन्ति। पृच्छाशैली चापि विविधविधा एवैतेषाम्--क्वचित्केवलं प्रस्तोतव्यस्य नाममात्रेणैव निर्देशः. यथा—"धर्मः" "सत्यम्" "धैर्यम्" "अहिंसा"। अन्यत्र विधिनिषेधात्मकवाक्यैः प्रस्तोत-व्यविषयस्य निर्देशः, यथा—"धर्मं चर", "सत्यं वद", "मा हिंस्यात्सर्वा-भूतानि"। कुत्रचित् कार्यकारणभावेन, यथा—"विद्या ददाति विनयम्०",

"धर्मः सर्वसुखानां हेतुः", "उद्योगः सर्वसाधनम्", "ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत"। कचिदन्योक्त्या निर्दिश्यते प्रस्तोतव्यम्, यथा—"अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम्। रमते न मरालस्य मानसं मानसं विना"। "विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः"। अन्यैश्चापि विविधैः प्रकारैः प्रष्टुं शक्यन्ते प्रस्तावा एते। परीक्षार्थिभिश्चात्र पूर्णसावधानतया प्रवर्तितव्यम्, प्रश्नानुसारमेव लेखनमारब्धव्यम्, न तु सर्वत्रैकेनैव प्रकारेण।

**गीताप्रस्तावाः।**

**भगवद्गीता-प्रस्तावाश्च** साम्प्रतं विवेचनात्मकप्रस्तावेषु विशे-शेषतो लब्धस्थानाः, एतेषां लेखनाय श्रीभगवद्गीतायाः परिशीलनं परमावश्यकम्। श्रीगीताग्रन्थः सर्वोऽपि प्रस्तावमय एव तस्य सर्वेऽप्यध्यायाः कमपि विशिष्टमेकं विषयमधिकृत्य सन्ति प्रवृत्तास्तत एव तत्तदध्यायान्ते तत्तदेकविषयनाम्नैवाध्याय-नामनिर्देशः—"कर्मयोगो नाम" तृतीयोऽध्यायः। "भक्ति-योगो नाम" द्वादशोऽध्यायः। "कर्मसंन्यासयोगो नाम" पञ्चमः। "राज-विद्याराजगुह्ययोगो नाम" नवमः। "दैवासुरसम्पद्विभागयोगो नाम" षोडशः, इत्यादि। स्थाने स्थाने च सन्ति प्रस्तावविषयाः, येषां निबन्धनसामग्री चापि पूर्वापरेषु पञ्चषेषु द्वित्रेषु वा श्लोकेषु विद्यते पूर्णतया वर्णिता परीक्षासु चापि समायान्ति प्रतिवर्षं द्वित्रा गीताप्रस्तावा अवश्यमेव।

## प्रस्तावाङ्गानि

(१) प्रतिज्ञा, (२) उपपत्तिः, (३) दृष्टान्तः, (४) उपसंहारः, इति चत्वार्येतानि प्रस्तावस्य प्रधानतोऽङ्गानि। प्रसङ्गापातनं च प्रतिज्ञाया एव प्राथमिकमङ्गमिति नास्ति तस्य पृथक् प्रस्तावाङ्गत्वम्। इदं प्रसङ्गापातन-मेव "भूमिका", "पूर्वपीठिका", "आपातनिका" इत्यादिभिर्विविधैः पर्याय-शब्दैर्व्यवह्रियते। प्रस्तावलेखने चास्य बहुमहत्त्वपूर्णं विद्यते स्थानम्, इदं प्रस्तावस्य भवति मुखमिव, नाटकेषु चेदमेवाऽऽमुखं प्रस्तावनेति वाऽऽख्यायते। सर्वप्रस्तावेषु नेदमेकविधमेव। यत्र प्रस्तोतव्यानां केवलं

**प्रस्तावाङ्गेषु प्रसङ्गापातनम्।**

नाममात्रेणास्ति निर्देशस्तत्र प्रसङ्गापाते प्रायः स्वतन्त्रा भवन्ति लेखकाः—तद्विषयक-वर्तमान-धारणावर्णनमुखेन प्राचीनभावनाप्रदर्शनप्रकारेण साम्प्रतिक-परिस्थिति-पर्यालोचनासमालोचनाप्रकारेण वा येन केनापि हृदयहारिणा

प्रकारेण कर्तुं प्रभवन्ति प्रसङ्गापातनम्। कार्यकारणात्मकेषु च प्रस्तावेषु कार्यस्य ( साध्यस्य ) प्राप्तौ सर्वेषां कामनां प्रदर्श्य तस्याः प्रस्तुतप्रस्तोतव्य-साधनाधीनतां प्रतिपाद्य आपात्यते प्रसङ्गः, यथा—"सुखसाधनं धर्मः" इति प्रस्तोतव्ये प्रथमं सुखस्य सर्वकाम्यत्वं प्रतिपादनीयं, ततस्तत्साधनेषु विचार-मापाद्य धर्मस्यैव सर्वसुखसाधनत्वेन प्रसङ्ग आपातनीयः। "आपदां तरणि-धैर्यम्" इत्यत्र सर्वेषां कृते आपदापतनं स्वाभाविकमित्यापाद्य आपत्ति-ग्रस्तस्य निष्फलीभूतबाह्यसाधनस्य निराशप्रायस्य प्राणिनो धैर्यमन्तरा नास्ति किमप्यवलम्बनम् इत्यादि रूपेणाऽऽपातयितुं शक्यते प्रसङ्गः। साम्प्रतं च कथोपकथाभिर्नाटकीयेनौपन्यासिकेन च प्रकारेण क्रियते प्रसङ्गा-पातनम्। गीताप्रस्तावेषु च प्रसङ्गापातनं विचारात्मकशैल्या ( दार्शनिक-परिपाट्या ) विधीयताम्, अथवा कार्यकारणभाववर्णनविधया विधीय-ताम्। सर्वमिदं तत्तदादर्शप्रस्तावेषु स्वयं स्फुटीभविष्यत्येव।

इदं तु ध्येयम्—प्रसङ्गापातनमिदम् अनुज्झित-प्रकृतविषय-सम्बन्धं मनोहरतरम् आकर्षकं सरलातिसरलशब्दनिबद्धं भावमयं च स्यात्। किञ्च यत्र प्रस्तोतव्यविषयबोधकानि वाक्यानि अन्योक्तिरूपाणि गम्भीरभावा दुरूहाः श्लोका वा प्रस्तावशीर्षकरूपेण निहिता भवेयुस्तत्र तेषां श्लोकानां वाक्यानां वा भावार्थविशकलनमवश्यं क्रियताम्। प्रस्तोतव्यस्य च विषयस्य स्फुटतया निर्देशश्च विधीयताम्।

## ( १ ) प्रतिज्ञा

एवं मनोहारिणा प्रकृतोपयोगिना च प्रकारेण प्रसङ्गापातनं विधाय क्रियतां प्रस्तोतव्यविषयस्य निर्देशः, इयमेवोच्यते "प्रतिज्ञा"। "साध्यनिर्देशः प्रतिज्ञा" इति तस्या लक्षणम्। अत्र साध्यस्य प्रस्तोतव्यस्य प्रथमं साधारणतया निर्देशं कृत्वा तस्य स्वरूपं प्रतिपादनीयम्, सति सम्भवे तद्भेदाश्च प्रदर्शनीयाः, अथ सामान्यतोऽधिकारिव्यवस्थापनया विध्यात्म-केषु प्रस्तावेषु विधिः, निषेधात्मकेषु च निषेधः प्रदर्श्यताम्, यथा—"धर्मं चर" इत्यत्र धर्मस्य स्वरूपादिकं प्रतिपाद्य लौकिकपारलौकिकश्रेयोऽर्थिनां कृते धर्मस्याऽऽचरणीयता प्रदर्श्येत। "नानृतं वदेत्" इत्यत्र च अनृतस्य स्वरूपादिकं प्रतिपाद्य समस्तानां कल्याणार्थिनां कृते तस्य निषेधो

विधीयेत। निषेधविध्यात्मकेभ्योऽन्यत्र तु निन्द्यस्य निन्द्यत्वं स्तुत्यस्य स्तुत्यत्वमात्रमेव प्रदर्शनीयम्। प्रस्तोतव्यस्य स्वरूपमत्र प्रदर्श्यते, सहैव च तद्विषयिणीनां वर्तमानकालिकीनां पूर्वकालिकीनां च धारणानां विवेचनमपि क्रियतामत्रैव। प्रतिज्ञायां प्रस्तोतव्यस्य सम्पूर्णाऽपि रूपरेखा तद्विषयका लेखकस्य स्वतन्त्रा विचारा धारणा वा सामान्यतो भवन्ति निर्दिष्टाः।

## ( २ ) उपपत्तिः

प्रतिज्ञायां निर्दिष्टस्य हि विषयस्य हेतुभिस्तर्कवितर्कैरन्वयव्यतिरेकाभ्यां समर्थनम् = "उपपत्तिः"। अत्र खलु प्रस्तुत-प्रस्तोतव्यस्य लाभाऽलाभा दर्श्यन्ते, वैज्ञानिकं महत्त्वमुपयोगित्वं च प्रतिपाद्यते, भौतिकाऽभौतिकाश्च हानिलाभाः देशदेशान्तरेषु तदुपयोगप्रकारः, तदभावे जनिष्यमाणा हानयः। तस्याऽऽध्यात्मिकजीवनेन सम्बन्धः व्यावहारिकजीवनेऽनिवार्योपयोगिता। पारलौकिका लाभाः। शरीरे मनसि समाजे जातौ राष्ट्रे-संसारे च तस्य कस्को भवति प्रभावः, इत्यादि सर्वमपि प्रदर्शनीयम्।

तद्विषये च पूर्वेषामृषीणामाचार्याणां सम्मतयः, वर्तमान-कालिकानां प्राच्यानां पाश्चात्यानां च विदुषां महापुरुषाणां वैज्ञानिकानां च विचारास्तद्विषयकाः प्रदर्शनीयाः। अन्यच्चापि सर्वमत्रैव भवति लेखनीयम्, येन परिपूर्णतया स्यात् समर्थितः प्रस्तोतव्यो विषयः। विशेषतः शास्त्रीय-प्रस्तावेषु अङ्गमिदं भजते प्राधान्यम्, 'तत्र हि शास्त्रीयरीत्या पूर्वपक्षाणां क्रियते प्रदर्शनं प्रदर्श्यन्ते च विविधा युक्तयः प्रमाणानि सम्मतयश्च मान्यानां शास्त्राणाम्, विरुद्धानां खण्डनं प्रस्तोतव्यस्य साधनं समर्थनं पोषणं विरोधानां व्यवस्थापनं च प्रतिपाद्यते।

## ( ३ ) दृष्टान्तः

प्रतिज्ञायां निर्दिष्टस्य उपपत्तिभिः समर्थितस्य प्रस्तोतव्यस्य विषयस्य परमप्रसिद्धेन प्राचीनेन वर्तमानकालिकेन च इतिहासेन परिपोषणं दृष्टान्तः। एतेन च आदर्शेन मुखस्येव स्फुटतरं जायते निदर्शनं विषयस्य। सम्यक् सम्पादितोऽपि पदार्थः प्रकाशमन्तरा यथा नाऽवभासते, सति च प्रकाशे भवति तस्य स्फुटतरोऽवभासः, तथैवात्रापि दृष्टान्तमन्तरेण प्रस्तुतविषयस्य

न भवति स्फुटतरोऽवभासः। इदं च प्रस्तावाङ्गं विवेचनात्मकप्रस्तावेऽस्ति बहु महत्वपूर्णम्, किन्तु दृष्टान्ताः खलु सर्वत्र प्रकृतोपयोगीकृत्य संक्षिप्यैव दातव्याः, विस्तृतायाः प्रसिद्धकथायाः केवलं तावानेवांशो दृष्टान्तरूपेणो-पस्थापनीयो यावान् प्रकृतविषयोपयोगी स्यात्, अतिविस्तृतकथालेखनन्तु सर्वथैव परित्याज्यम्।

अपि च सर्वेषामपि महापुरुषाणां चरित्राणि आचाराश्च प्रायः सर्वे-ष्वपि प्रस्तावेषु दृष्टान्तरूपेण ग्रहीतुं शक्यन्ते, किन्तु तत्र तेषां प्रकृतोप-योगीकृत्य निधाने एव लेखकस्य बुद्धिकौशलम्, यथा—धर्मपुत्रो युधिष्ठिरः सत्ये धर्मे धैर्ये सर्वत्रापि उदाहरणतयोपस्थापनमर्हति तत्र सत्ये सत्य-निष्ठाप्रसङ्गेन, धर्मे धर्मधौरेयताप्रदर्शनेन धैर्ये चानेकविपद्ग्रस्तस्यापि धीरताश्रयणप्रसङ्गप्रदर्शनेन।

## ( ४ ) उपसंहारः

अथ प्रतिज्ञानिर्दिष्टस्य=विशकलितस्वरूपस्य उपपत्तिभिः समर्थि-तस्य, दृष्टान्तैः परिपोषितस्य स्फुटतरावभासितस्य च विषयस्य सर्वेषां पूर्वोप-पादनानामेकवाक्यतासम्पादनपुरःसरमुपसंहरणम् "उपसंहारः"। पूर्वस्य सर्वस्यापि वर्णनस्यात्र सिंहावलोकनं क्रियताम्। प्रतिज्ञायां प्रतिज्ञातस्य च विषयस्य अनुवादो विधीयतां समापनाय, क्रियतां च साभिनिवेशं तथा प्रयत्नो यथा आमुखे आपातितस्य प्रस्तुतविषयस्य संपूर्णविधानं चित्रं सम्पन्नं सत् स्फुरदिवाऽवभासेत। अन्तिमेषु च शब्देषु विधेयानां विधिः, निषेध्यानां निषेधः, निन्द्यानां त्यागः, ग्राह्याणां ग्रहणं च प्रतिपाद्यताम्, संस्मार्यतां च प्रस्तावशीर्षकवाक्यं केनापि मनोहरतरेण भङ्ग्यन्तरेण। आलोचनप्रत्यालोचनात्मकेषु सामाजिकनैतिकेषु वा उपसंहारे समुपस्थाप-नीया भवन्ति वर्तमानोपयोगिन्यो योजनाः। उपसंहारविषयको विशेषश्च प्रकटीभविष्यति तत्तदादर्शप्रस्तावेषु।

## अंशकल्पना

यथा परिचयात्मकप्रस्तावेषु चरितात्मकेषु च 'अंशकल्पना' भवत्याव-श्यकी तथैव विवेचनात्मकप्रस्तावेष्वपि प्राथमिकप्रस्तावशिक्षार्थिनां कृते "अंश-कल्पना" परमावश्यकी। विवेचनात्मकप्रस्तावेषु प्रतिप्रस्तावं भिन्न-

भिन्नैव भवति इयमंशकल्पना, प्रस्तावलेखनात्पूर्वं लेखकेन स्वयमेव तत्र-तत्रांशकल्पना क्रियताम्—तत्रायमादर्शः प्रदर्श्यते संक्षेपेण—

**धर्मं चर** इति प्रस्तोतव्ये—

( १ ) धर्मस्वरूपम्, धर्माचरणस्य विधेयता ।

( २ ) धर्माचरणस्यावश्यकता, प्रभावश्च धर्मस्य ।

( ३ ) धर्मस्य लोके परलोके लाभाः ।

( ४ ) धर्मत्यागे दोषो हानिर्वा ।

( ५ ) धर्माचरणाल्लब्धकल्याणानां निदर्शनानि ।

( ६ ) ततो धर्माचरणस्यावश्यकत्वम् ।

( ७ ) परमोपयोगित्वेनाऽऽचरणीयताविधानम् ।

**सत्ये नास्ति भयं क्वचित्** इति प्रस्तावे—

(१) भयकारणानुसन्धानपूर्वकं निर्भयतोपादेयता ।

(२) सत्ये एव भयाऽभावः ।

(३) सत्यस्वरूपम् , विशकलनं विस्तरेण ।

(४) कुतो न सत्ये भयप्राप्तिः ।

(५) सत्यस्याऽऽध्यात्मिका लाभाः ।

(६) सत्येन भयाभावे सति लौकिकपारलौकिकश्रेयःप्राप्तिः ।

(७) सत्यपरायणानां निवृत्तसर्वापत्तीनां महापुरुषाणां निदर्शनम् ।

(८) निर्भयताप्राप्तये कल्याणार्थिभिः सत्यमेवोपादेयम् ।

एवं सर्वत्र प्रस्तावेषु प्राथमिकलेखकैरंशकल्पनां कृत्वैव प्रवर्तनीयम् , एतेन प्रस्तावनिर्माणे भूयःसौविध्यं जायते, "साम्प्रतमग्रे किं लेख्यम्" इति व्यग्रता निवर्तते वर्धते च प्रस्तावकलेवरम् ।

## सामग्री-संग्रहः

कस्यापि प्रस्तावस्य लेखने तत्सामग्रीसङ्ग्रहणं परमावश्यकम् , तत्सङ्ग्रहाय चास्माभिः प्रस्तावपुस्तकान्यवश्यं द्रष्टव्यानि, तत्तत्प्रस्तावस्य सम्बन्धे किं किं वर्णितमिति सावधानं निरीक्षणीयम् । केन केन च प्रकारेण किं किं निरूपयितव्यमिति शिक्षणीयम् । ( अन्यदीयप्रस्तावानां रटनं तु सर्वथा परित्याज्यम् , तथाकृते स्वकीया रचनाशक्तिर्विनश्यति, बुद्धिश्च

भवति कुण्ठिता ) केवलं प्रस्तावसामग्रीसङ्ग्रहाय रचनाशैलीशिक्षणाय प्रस्तावशीर्षकीभूतानां वाक्यानां परिचयाय चावश्यं यथालाभं पठ्यन्तां प्रस्तावपुस्तकानि, संस्कृतसमाचारपत्राणि हिन्दीसमाचारपत्राणि चावश्यमवलोक्यन्ताम्। धर्मपुस्तकानि राजनीति समाजनीति-देशनीति-विदेशनीति सम्बन्धिपुस्तकानि चाप्यधीयन्ताम् । सदाचारनीत्यादिविषयकाणि व्याख्यानानि चर्चाश्च श्रूयन्ताम् । श्रीभगवद्गीतास्वाध्यायश्चाप्येतदर्थं परमोपयोगी, गीताप्रस्तावानां सामग्री तु गीतायां तत्पूर्वोत्तरेषु द्वित्रेषु पञ्चषेषु वा श्लोकेषूपलभ्यते एव । अन्येषां चापि सर्वेषां प्रस्तावानां भूयसी सामग्री गीतायां प्राप्तुं शक्यते । को नामास्ति संसारे विषयो यो नास्ति गीतायां साधु विवेचितः । किञ्च परीक्षा-पाठ्यग्रन्थेष्वपि प्रस्तावानां विद्यते भूयसी सामग्री; यदि सावधानतया गृह्येत तयापि प्रस्तावलेखने भूयान् लाभो भवितुमर्हति । प्रस्तावशिक्षकैश्चापि प्रस्तावशिक्षणसमये ( सर्वतः संगृह्य ) शिक्षार्थिभ्यो वितरणीया प्रस्तावसामग्री, स्वयं चापि प्रस्तावा व्याख्यातव्या विवेक्तव्याश्च, यथा—शिक्षार्थिनां हृदयेषु प्रस्तावानां सम्पूर्णमपि स्वरूपं चित्रितमिव स्यात् । सति चाभ्यासे शिक्षार्थिनः स्वयं स्वतन्त्रतया प्रस्तावरचनायै आदिश्येरन् ।

## भाषाधिकारः

प्रस्तावरचनायै परमावश्यकमिदम्, यद् यस्यां भाषायां लेखनीयः खलु प्रस्तावस्तत्र लेखकस्य पूर्णतया स्यादधिकारः। संस्कृतप्रस्तावलेखनार्थं संस्कृतभाषाधिकारसिद्धये शिक्षार्थिभिः परस्परं संस्कृत एव वार्तालापो विधीयेत, संस्कृतव्याख्यानानि श्रूयेरन् । संस्कृतसमाचारपत्राणि नित्यं पठ्येरन्, पारस्परिकपत्रादिव्यवहाराः संस्कृते क्रियेरन्, यथालाभं संस्कृतभाषाया गद्यपद्यात्मकानि काव्यानि दृश्येरन्, संस्कृतनाटकानि उपन्यासाः कथाग्रन्थाः स्मृतयः सत्यां योग्यतायां दर्शनानि उपनिषदो भाष्याणि चाभ्यस्येरन् । हृदये विद्यमाना अपि भावा भाषाऽधिकाराभावे नैव शक्यन्ते प्रकाशयितुम्, भवति च वैकल्यं मानसे, ततो निर्विण्णेन मध्य एव त्यज्यते प्रस्तावलेखनम् । अतः प्रस्तावशिक्षार्थिभिर्भाषाधिकारप्राप्तये साभिनिवेशं भूयान् प्रयत्नोऽनुष्ठीयताम् ।

## प्रस्तावे प्रयोक्तव्या भाषा

प्रस्तावलेखने भाषा स्वाभाविकी सरलातिसरलैव प्रयोक्तव्या। "प्रसन्नसंस्कृतम्" एतत्कृते परमोपयोगि। प्रसन्नसंस्कृतं नाम प्रसादगुणोपेतं सरलतरं सर्वजनसुखबोधं सुन्दरं संस्कृतम्। यथा हिन्दीभाषायां "खड़ी बोली" सर्वेषां सुखबोधा परमोपयोगिनी च प्रसिद्धा। इदं च प्रसन्नसंस्कृतं न खलु नवीनं संस्कृतान्तरं नाम, अपि तु प्राचीनतरोऽयं सरलः पन्थाः। आरण्यक-ग्रन्था उपनिषदो वाल्मीकिरामायणं विष्णुपुराणं महाभारतं दर्शनानि व्याकरणमहाभाष्यं रघुवंशादिकाव्यानि गाथाग्रन्थाश्च प्रसन्न-संस्कृतस्यैव सन्ति निदर्शनानि। प्रसन्नसंस्कृते प्रसिद्धानां सुखतरार्थबोधानां शब्दानां प्रयोगः, द्वित्राणां त्रिचतुराणामेव वा पदानां समासः, प्रसादो गुणः पाञ्चालीप्राया रीतिः, दूरदूरस्थपदानामन्वयक्लेशनिरासः सर्वसाधारण-प्रयोगयोग्यत्वमित्यादिः सर्वोऽपि स्वाभाविकभाषाभावी गुणसन्दोहो विद्यते स्वभावत एव। प्रवर्तन्तां नाम प्रौढाः सिद्धहस्ता लेखका जटिलया समासबहुलया भाषाशैल्या। परं साधारण-संस्कृतप्रस्ताव-लेखकैरवलम्बनीयः सरलतरोऽयमेव मार्गः। सर्वस्यापि स्वाभाविक एव मार्गो भवति श्रेयस्करः। सामर्थ्यहीनो जटिले पथि प्रवृत्तोऽवसीदत्येव। अतो भावगम्भीरया सरला-तिसरलया परमसुबोधया प्रसन्नरूपयैव भाषया प्रस्तावलेखने प्रवर्तितव्यम्।

## प्रस्तावलेखने परिहरणीया दोषाः

(१) **व्याकरणप्रमादाः**—अशुद्धिबाहुल्येन विशेषतो व्याकरणप्रमादै-र्लेखकस्याऽयोग्यताऽव्युत्पन्नता च प्रकटीभवति, अतो व्याकरणाऽशुद्धयो-ऽवश्यं परिहार्याः।

(२) **लेखदोषाः**—मसीस्यासकदूषितो लेखनियमहीनो दुष्पठश्च लेखो नैव कदापि लेख्यः।

(३) **असम्बद्ध-विषयप्रपञ्चः**—यस्य हि विषयस्य प्रकृतप्रस्तावेन कश्चित् सम्बन्ध एव नास्ति तस्योपन्यासः सर्वथा परमदोषावहः, सावधानतया तत्परित्यागो विधीयताम्।

(४) **अन्यदीयग्रन्थोद्धरणबाहुल्यम्**—अन्यदीयग्रन्थस्थितान् भावान् स्वरचितसंस्कृतेन प्रकृतोपयोगीकृत्योपस्थापनं न दोषाय, अन्यदीयग्रन्थानां तदीयशब्दैरेव बाहुल्येनोद्धरणमवश्यं दोषावहमेव । प्रमाणरूपेण सम्मतिरूपेण वा क्वचित् क्वचित् तदुपस्थापनं तु प्रत्युत गुणायैव ।

(५) **आदौ वृथा प्रकृत्यादिवर्णनम्**—यदीदं क्वापि प्रस्तावे उपयुक्तमपि स्यात् तथाप्यल्पैरेव शब्दैर्द्वित्रासु पञ्चषास्वेव पङ्क्तिषु समाप्यताम् । अनुपयोगे केवलं प्रस्तावकलेवरवृद्धये क्रियमाणमिदं सर्वथा दोषावहमिति परित्यज्यताम् ।

(६) **वृथाविस्तारः**—परीक्षासु अङ्कशतके सति पङ्क्तीनां सार्धशतं पर्याप्तम् । तत आधिक्ये वृथाविस्तरः । पंङ्क्तिशतकान्न्यूनमपि नास्ति पर्य्याप्तम् ।

## अवश्यं पालनीया लेखनियमाः

(१) पत्रस्य वामभागेऽङ्गुलीद्वयमितं स्थानं सर्वथा रिक्तं परित्यज्यताम् ।
(२) अक्षराणि सुवाच्यानि सुन्दराणि च लिख्यन्ताम् ।
(३) पदं पदं पृथक् कृत्य ( समुचितव्यवधानेन ) लिख्यताम् ।
(४) लेखे विरामादिचिह्नप्रदाननियमाः पूर्णतया पालिताः स्युः ।
(५) लेखे प्रसङ्गसमाप्तौ प्रघट्टकोऽवश्यं परिवर्तनीयः ।
(६) प्रघट्टकस्य प्रथमापङ्क्तिरङ्गुलीद्वयमितं स्थानं रिक्तं परित्यज्य लेखनीया, अन्याश्च सर्वाः पङ्क्तयः सरला विरला ऋजवश्च लेखनीयाः ।

## लेखे विरामादि-चिह्नानि

| | | |
|---|---|---|
| अवान्तरविरामचिह्नम् | ... | , |
| अर्धविरामचिह्नम् | ... | ; |
| पूर्णविरामचिह्नम् | .... | । |
| प्रसङ्गसमाप्तिचिह्नम् | ... | ॥ |
| प्रश्नचिह्नं काकुचिह्नं च | ... | ? |
| सम्बोधन-खेदाश्चर्यचिह्नम् | ... | ! |
| पर्यायचिह्नं संयोगचिह्नं च | ... | = |

| | | |
|---|---|---|
| निर्देशचिह्नम् | ... | :— |
| मध्ये भावादिप्रदर्शकचिह्नम् | ... | ( ) |
| त्रुटिपूर्तिचिह्नम् | ... | ^ |

## रचना

प्रस्तावस्य रचना गद्यमयी पद्यमयी वा उभयथापि भवितुमर्हति। किन्तु तत्रेदम् अवश्यं ध्येयम्—कवित्वशक्तिहीनः कविताऽभ्यासविधुरः कदापि पद्यमयरचनायां न प्रवर्तेत। तत्र तु—आशुकवय एव=होरात्रयात्मके एव समये सार्धशतं पद्यानि विरचयितुं समर्था एव सफला भवितुमर्हन्ति; अतस्तादृशैरेव तत्र प्रवर्तनीयम्। इतरे तु साधारणलेखका गद्यमयरचनायामेव प्रवर्तेरन्। पद्यरचनाऽभ्यासश्चावश्यं रचनार्थिभिः करणीयः, सति चाभ्यासे पद्यमयप्रस्तावलेखनमपि नातिदुष्करं कस्यापि। प्रत्युत केषाञ्चित्तु गद्यात्पद्यमेव सुकरं जायते।

## अभ्यासः

प्रस्तावरचनायाः सर्वप्रथमं साधनम् अभ्यास एव। केचित्तु लेखनात् पूर्वमेव व्याकुलाः सञ्जायन्ते—"किं लिखामि न स्फुरति किमपि' इति, अनभ्यासस्यैवायं दुष्परिणामः। किमपि स्फुरेद् वा नवा स्फुरेत्, लेखितुं कृतनिश्चयः प्रवर्तेतैव, अभ्यासः सर्वंचित् साधयिष्यति। अभ्यासे कृते यदद्य दुष्करं श्वोऽवश्यं सुकरं भविष्यति। अतः प्रस्तावनिबन्धने कदापि प्रमादो मा भूत, अभ्यासो निरन्तरं क्रियेत। अभ्यासे च यद् यदस्ति अवलम्बनम्, तत्सर्वं तु पूर्वमुक्तमेव।

पुरतश्च दृश्यन्तां साऽभिनिवेशं च पठ्यन्ताम् आदर्शभूताः सर्वविधाः प्रस्तावा योग्यातियोग्यानां विदुषां लेखनकला-चातुरीलब्ध-प्रतिष्ठानां लेखक-महाभागानाम्।

# इदं तु बोध्यम्

परकीयाः प्रस्तावाः सदा सामग्री-संग्रहाय शैली-शिक्षणाय प्रस्ताव-विषयपरिचयाय च पठनीयाः, न कदापि प्रस्तावानां शुकवद् रटनं कर्त-

व्यम्। शुकवद् रटने कदाचिद् हानिरपि महती भवितुमर्हति। स्वकीया च योग्यता हीयते, रचना-शक्तिश्च विनश्यति।

किञ्च एकैकस्य प्रस्तावस्य सूक्ष्मेक्षिकया पर्यालोचने बहूनामितरेषां तादृशानां प्रस्तावानां लेखनस्य पाटवं प्राप्तुं शक्यतेऽतः सर्वेऽपि प्रस्तावाः परम-सावधानतया पठनीयाः तद्गता विषयाश्च हृद्गताः करणीयाः। अनन्तरं चाभ्याससिद्धये पूर्व-पठित-प्रस्तावानामेव स्वयं विरचनं विधीयताम्। सति चैवम् अवश्यमेव विद्यार्थिनः प्रस्ताव-लेखने योग्या भविष्यन्ति, रचना-शक्तिश्च वृद्धिं गमिष्यति।



# आदर्श-प्रस्ताव-रत्नमालायाम्

## अथ परिचयात्मकाः प्रस्तावाः ।

### (१) श्रीगणेशः

[ श्रीगणेशो माङ्गलिको देवः मङ्गलार्थमेव तस्येह प्रथमं दीयते परिचयः। भूयान्मङ्गलं लेखकानां प्रकाशकानाम् अध्येतॄणां च सर्वेषां, सर्वस्यापि विश्वस्य च ]

अखिलेषु कार्येषु सर्वप्रथमं भवति पूजनम् अस्य। विघ्नहरोऽयं देवः। विघ्नविघातायैव पूज्यते प्रथमं सर्वत्र भगवान् श्रीगणेशोऽयं; गजाननो लम्बोदरः सिन्दूरवर्णश्चतुर्भुजः पाशाङ्कुशाभय-मूषक-ध्वजपाणिः प्रसन्न-वरदमूर्तिः ऋद्धिसिद्धिभ्यां सदा संसेव्यमानो विराजते।

श्रीभगवत्या पार्वत्या स्नानमाचरन्त्या स्वशरीरमलेन निर्मितः पुरुषाकृतिः पिण्डो जीव जीवेति जीवितो द्वारदेशोऽवस्थापितोऽन्तःप्रवेशमवरुन्धन् महादेवेन छिन्नमस्तको पार्वतीकृतानुरोधात् पुनर्महादेवेनैव गजशीर्षं समादाय सन्धायोज्जीवित इति गजाननो बभूवेति ह स्माचक्षते पौराणिकाः केचित्।

सर्वारम्भेषु श्रीगणेशनामस्मरणादेव च साम्प्रतं 'कार्यारम्भ'शब्द-स्थाने "श्रीगणेश"मेव प्रयुञ्जानाः समुपलभ्यन्ते बहवः—"अध्ययनस्य श्रीगणेशः कृतः" "भोजनस्य श्रीगणेशोऽकारि" इत्यादि।

"श्रीगणेशो विघ्नकारिणामधीश्वर इति रौद्रोऽयं देवः, अत एव विघ्नभीतैः सर्वैरपि सर्वप्रथमं मान्यते--मा नो विघ्ना भूवन्निति। क्रूरनिसर्गाणाम् अनार्य्याणां देवता आसीदयम्, कालान्तरे चास्य आर्यैः स्वकीय-वैदिकदैवतेषु सन्निवेशोऽकारि, तत एवार्वाचीनग्रन्थेष्वेवास्य समुपलभ्यते भूयसी चर्चा न पुनर्वैदिकसाहित्ये" इति केचिदाधुनिकाः पाश्चात्य-विद्वद्गवेषणानुसारिणो ब्रुवन्ति।

परं भारतीयार्ष-साहित्य-तत्त्वविचक्षणाः प्राच्या विद्वांसो नैतत् सहन्ते। ते हि तत्तच्छ्रुतिस्मृतिपुराणादिप्रमाणजातैः श्रीगणेशस्य वैदिकार्यदेवतात्वमेव द्रढयन्ति। किमपि स्यात् भगवान् श्रीगणेशोऽद्य सकलस्यापि आस्तिकसंसारस्य प्रथमाराध्यः पूज्यः स्तुत्यः स्मरणीयश्चास्ति। वैष्णव-शैव-सौर्यादिसम्प्रदायवद् "गाणेशो"ऽपि अस्त्येकः सम्प्रदायः, यस्योपास्यः श्रीगणेश एव, मन्त्रश्च गणेशगायत्री, रहस्यविद्या च "गणपत्युपनिषत्"। तेषामयमेव साक्षात्परमात्मा, ब्रह्मवैवर्तपुराणस्य गणेशखण्डे विवृतोऽस्य महीयान् महिमा। गणेशादेव जायते सर्वं जगत् अन्ते लीयते चास्मिन्नेव, अयं सर्वादिः स्वयमनादिः, सर्वान्तः स्वयमनन्तः, सच्चिदानन्दस्वरूपो भूमाऽयमेव।

स्थूलविग्रहश्चाप्यस्य विराड्रूपस्य भगवतः प्रतीकम्। विशालतरमुदरमन्तर्लीनं जगत् सूचयति। उत्तमाङ्गं चातिमहद् विज्ञानवैभवं गमयति। ऋद्धिः सिद्धिश्च माया चाऽविद्या चेति 'समष्टि-व्यष्ट्युपाधिरूपे'। वाहनश्च मूषकः सर्वेषां जीवनमोषकतया कालरूपः। सचास्य सर्वदाऽधस्तिष्ठति वशीकृत इति न तस्यास्ति प्रभावोऽणुरपि श्रीगणेशे, तेन कालपरिच्छेदातीतोऽयं भगवान् श्रीगणेश इति ज्ञायते निश्चयेन। वेदान्तिनां ब्रह्मेवानिर्वचनीयस्वरूपः सर्वस्वरूपोऽयमेव मायोपाधिक ईश्वरः, अविद्योपाधिको जीवश्चेति सर्वरूपाय सर्वसाक्षिणे सर्वान्तर्यामिणे श्रीगणेशाय भूयो भूयो नमः क्रियते गणपत्युपनिषच्छब्दैरेव—

नमस्ते गणपतये। त्वमेव सर्वं खल्विदं ब्रह्मासि।
अव वक्तारम्। अव श्रोतारम्। ओम्।

—:०:—

## (२) भगवती गङ्गा

(लेखकः—प्रोपाध्यायः श्री पं० निगमानन्द शास्त्री
विद्यालङ्कारः कविकान्तो हिन्दीप्रभाकरः)

[ भगवती भागीरथी आधिभौतिकदृष्ट्या आधिदैविकदृष्ट्या आध्यात्मिकदृष्ट्या च कियती गौरवान्विता दिव्या भारतीया

परमपावनी महानदी, कियांश्चास्या महीयान् महिमा, पाश्चात्यवैज्ञानिकानां मते च कीदृशमस्या गौरवमिति सामान्यतो लघुतरेऽस्मिन् लेखे परिचायिता भविष्यन्ति पाठकमहाभागाः। नदीपरिचयात्मकाः प्रस्तावाश्च केन प्रकारेण लेख्या इत्यत्रादर्शनिदर्शनमिदम्। ]

इयं हि परमपावनी भगवती गङ्गा भारतीया सर्वोत्तमा दिव्या नदी। या च स्वेन महत्त्वेन सर्वतीर्थेषु मूर्धन्यतां गता। ऋग्वेदादौ भारतीयतीर्थेषु सर्वप्रथमतयेयं संस्तूयते—"इमं मे गङ्गे यमुने सरस्वति शतुद्रिस्तोमं सचत" इति। अन्यत्रापि—

"गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥" इति च।

अस्या एव जाह्नवी, भागीरथी, हैमवती, शैलसुतासपत्नीप्रभृतीनि नामान्तराणि। इयमेव त्रिधात्मना स्वर्गं पातालं मर्त्यलोकञ्च याति तस्मात् त्रिपथगेत्युच्यते। जह्नोराश्रममध्यादधस्तादागतेयमिति जाह्नवी नाम। स्वर्गादवतरन्तीयं शिवजटास्ववरुद्धा पुनर्भगीरथस्य प्रार्थनया बिन्दुसरोवरे न्यपतत्। ततः सप्तधाराकारेण निरगच्छत्। ह्लादिनी-पावनी-नलिनी-नाम्न्यस्तिस्रो धाराः पूर्वस्यां दिशि वङ्क्षु-सीता-सिन्धुनामधेयास्तिस्रो धाराः पश्चिमायां दिशि एका च धारा भगीरथनिर्दिष्टे वर्त्मन्यागच्छत्; सैषा-भगवती भागीरथी नाम। यया भगीरथेन सगरवंशः समुद्धृतः। हिमवतः प्रभवतीति हैमवती नामास्याः। महादेवशिरसि स्थितेति हेतोः शैलसुता-सपत्नीत्यपि आख्यायते।

[ इदमत्रावश्यमवधेयतां याति—'पुराणेषु विद्यते त्रिविधा भाषा प्रयुक्ता, समाधिभाषा, लौकिकीभाषा, परकीया भाषा, चेति। समाधि भाषायां हि समाधिगम्यं गूढातिगूढं तत्त्वम् अलङ्कारशून्येन कठिनेन पथा वर्ण्यते, लौकिकीभाषायाञ्च तदेव तत्त्वं रूपकैरलङ्कारैश्च सरसप्रकारेण प्रतिपाद्यते। परकीयाभाषायान्तु धर्मतत्त्वम् इतिहासवर्णनविधया बोध्यते, समयभेदाद् अधिकारिभेदाच्च पुराणेषु भाषेव त्रिविधो भावश्चापि दृश्यते। अत एव एकैव कथा भिन्नभिन्नपुराणेषु बहुप्रकारेणाऽऽख्यायते। यथा

हि—एकैव गङ्गा क्वचित् महादेवस्य शिरसो निस्सरन्ती वर्ण्यते, क्वचिच्च 'ब्रह्मद्रवः' इत्यभिधीयते। प्रत्यक्षतस्तु पश्यामो हिमालयादुद्गच्छतीयम्। सत्यम्–स्थूलरूपेण इयं हिमालयात् प्रभवति। आधिदैविकाधिभौतिकभावाभ्यां महादेवस्योत्तमङ्गाद् उद्गच्छति। यतः पृथिवी-तत्त्वस्याऽधिपतिर्महादेवः—

"नभसोऽधिपतिर्विष्णुरग्नेश्चैव महेश्वरी।
वायोः सूर्यः क्षितेरीशो जीवनस्य गणाधिपः॥"

इत्याह शास्त्रम्। तस्मान्महादेवस्याधिभौतिकं स्वरूपं पृथिवी। सर्वोच्चतया हिमालयस्तस्य शिरःस्थानीयः। इति नोभयविधवर्णनयोः किञ्चिदन्तरं, केवलमधिकारिभेदाद् भावस्य भेदः। "यद् ब्रह्माण्डे तत् पिण्डे" इति नयेन आध्यात्मिकरूपेण तृतीयाऽस्ति ज्ञानगङ्गा। यां भगवान् शङ्कराचार्य आदिगङ्गेतिनाम्ना तुष्टाव "ज्ञानप्रवाहा विमलादिगङ्गा" इति। अस्या उत्पत्तिः विष्णोः। विष्णुश्च परमात्मनः चित्सत्तायाः (ज्ञानसत्तायाः) केन्द्रम् इति विज्ञानसिद्धं विष्णोस्तस्याः समुद्भवः। अयमेव भावः पुराणेषु एवं वर्णितो यद् महादेवस्य नृत्तं दृष्ट्वा विष्णुः द्रवीभूतो जातः। ततो गङ्गा निरगच्छत्। तस्मादपरमप्येकं नाम गङ्गायाः समजनि 'ब्रह्मद्रव' इति। अस्तु, प्रकृतमनुस्त्रियते।' ]

इयं भगवती गङ्गा जनेभ्यो जलसेचनादिकर्मणा भुक्तिं, स्नान–स्मरणाऽऽचमनादिना दुरितक्षयाद् मुक्तिञ्च ददाति यावान् महिमा एतस्याः संस्कृते हिन्दीभाषायाञ्च वर्णितो विद्यते। नैतावान् कस्या अपि इतरस्या नद्याः। स्थाने खलु इयमस्माकं जननी सुरसरिदिति।

एषा हि हैमवती हिमालयस्य "गंगोत्तरी" नामक-स्थानादुद्गच्छति। ततो दुर्गम-विषम-पथ-पतन-भीत्येव आदौ आत्मानं सर्वात्मना लघुना आकारेण वहति। पर्वतस्य वक्षःस्थलं विदार्य्य, विषमप्रस्तराणां मुखानि चरणाघातैः सम्मर्द्य पूरयित्वा च गिरिगह्वराणि, आत्मनो विजयाभिमानमुच्चैः कलकलध्वनिना घोषयतीव। सहर्षं जनेभ्यो मुक्तिहस्ताभ्यां परमनिर्मलानि निज-वारि-बिन्दु-स्थूलमुक्ताफलानि वितरतीव। आसन्ध्यमधिपर्वतं चरित्वा स्वान् वत्सान् पयसा पोषयितुं सरम्भाशब्दं स्नुत-स्तनी गौरिव वत्सवत्सला जननी गङ्गापि आगच्छति महता वेगेन

हरिद्वारभूमिम्। अत्र च सुतस्नेहभरेणेव बिभर्ति आत्मानं बृहदाकारेण। अन्ते च कृतकृत्या भगवतीयं लीयते "गङ्गासागरसंगम"—स्थाने वङ्गसागरे।

गंगायास्तटे सन्ति भूयांसि सुसमृद्धानि महानगराणि। येषु हरिद्वारं प्रयागः, कर्णपुरम्, वाराणसी, पाटलीपुत्रम्, कलिकाता च मुख्यतया गण्यन्ते। हरिद्वारे वाराणस्याञ्च वाचामगोचरं नाम गङ्गायाः सौन्दर्यम्। हरिद्वारे तु परमनिर्मले आदर्शशुद्धे गाङ्गेयवारिणि पर्वताः प्रतिबिम्ब-च्छद्मना आत्मानं दिदृक्षन्ते इव। अथवा—आत्मीयं स्थावरभावं विहातुकामा गंगायां स्नान्तीव। यद्वा—कस्यचित् स्नातुमागतस्य परमभागवतस्य चरण-रेणुस्पर्शं—यस्मै पूर्णकामो भगवानपि स्पृहयति—कामयन्ते ध्रुवम्। अपिवा—मन्ये पुष्प-फलभार-नतैरात्मीयैस्तरुभिराराधयन्ति "विमलतर-तरङ्गां मातरं चारुगङ्गाम्"। सायं प्रातः स्नातुमागतानां भक्तजनानां "जय गंगे" इति ध्वनिना मुखरितानि जायन्ते दिगन्तराणि। अधिजलं बहून् घृतपूरितान् दीपान् दर्शं दर्शं "नेदं नभो-मण्डलमम्बुराशिः" इति अपन्हुतिरपि नैव निन्हुते प्रकृतम्। अपितु "इदं नभश्चारु, न चाम्बुराशिः" इत्यात्मना सम्पद्यते।

वाराणस्याञ्चापि दशाश्वमेधघट्टे मणिकर्णिकातः प्रारभ्य हरिश्चन्द्रघट्टं-यावत् दिवसावसानसमये काष्ठमञ्चस्थानां वंगीयानां सङ्कीर्तन-मण्डलीनां भवति नयनसुखदं मनोरमं दृश्यम्। यत्र च मण्डलेश्वरो मुक्तकेशः सन् धृतपीताम्बरः, ऊर्ध्वबाहुरुत्थाय प्रथमं गायति सङ्कीर्तनपदम्। अन्ये च तद-नुयायिनो गृहीतकांस्यघण्टिकाः सज्जीकृतमुरजास्तदेव पदं मुहुर्मुहुरुच्चै-रुच्चारयन्ति। भवन्ति तत्रैवंविधा अनेकाः सङ्कीर्तनमण्डल्यः प्रभूतानि कथा-मण्डपानि च। नौकाभिर्जलविहारं विदधतां सम्पन्नपरिवाराणां दृश्यञ्चापि रमणीयतरं नयने हरति। यत्र नौकासु सकेशरा विजया घोट्यते। आत्मानु-रूप आनन्दोत्सवो मान्यते।

गङ्गायास्तटे पुण्याहेषु बहु—स्थानेषु मान्यन्ते महत्यो मेलाः। येषु प्रधानतया निर्दिश्यन्ते—गढमुक्तेश्वरः राजघाटः, प्रयागः, भृगोराश्रमः ( बलिया ), सोनपुरञ्च। षड्वर्षानन्तरं हरिद्वारस्य प्रयागस्याऽर्धकुम्भीपर्व, द्वादशवर्षानन्तरञ्च कुम्भपर्व चायाति। मध्ये मध्ये महावारुण्यादीनि पर्वा-

ण्यप्यागच्छन्ति। एषु दूरदूरदेशेभ्यो हिन्दुजनता स्नातुमागच्छति। यात्रिणां पर्णशालाभिरेकं पृथगेव सम्पद्यते महानगरम्। कथाव्याख्यानादीनाञ्च भवति सुप्रबन्धः। सर्वे सम्प्रदायाः महता समारोहेण स्वं स्वं यात्रामहोत्सवं मानयन्ति। अत्रत्या जनसङ्ख्या लक्षाण्यतिक्रम्य संस्पृशति कोटिम्।

सन्ति च गङ्गाया भूयांसो लाभाः-यथाहि, गङ्गाजलं निर्मलं निर्दोषं चास्ति। चिराय रक्षितमपि न विकृतिमापद्यते। अत्र विषये नास्ति कस्यापि विमतिः। पाश्चात्यवैज्ञानिकैस्तु साधु साधितमस्य महत्त्वम्। अत एव देशान्तरयायिनां पोतानां मध्ये यात्रिणां पानार्थमिदमेव सञ्चित्य नीयते। नेदं चिरविधृतमपि दूष्यते कीटाणुभिः। अपि चाऽस्मिन् क्षिप्ता रोगाणां कीटाणवो झटिति म्रियन्ते इति बहुधा परीक्षितम्। अनुश्रूयते—महाकुष्ठिनोऽपि सतत-गङ्गवास-जलसेवनादिना नीरोगतां गताः, के सन्तिः पुनः साधारणा रोगिणः। नात्र चित्रम् अनिर्वचनीयस्तावत् गङ्गाजलस्य महीयान् महिमा।

गङ्गाजलेन सिच्यन्ते क्षेत्राणि। हरिद्वारात् गङ्गाया एका महाकुल्या (नहर) निस्सारिता विद्यते; या कर्णपुरं यावत् गच्छति। यया अनुर्वरा अपि भूमयः शस्यश्यामला विधीयन्ते। अन्यथा तु संयुक्तप्रान्तः शुष्कतां गच्छेत् काऽऽशा स्यात् प्रभूततरधान्यराशेः।

अन्यच्च—वाष्पगन्त्रीणामाविष्कारात् पूर्वं गङ्गैवाऽस्माकं प्रधानतमं व्यापारसाधनमासीत्, विद्यते साम्प्रतमपि। यस्याः प्रवाहेण व्यापारिणो जना नौकासु क्रय्यवस्तूनि स्थापयित्वा निर्भयमनायासञ्च स्थानान्तरं यान्त्यायान्तिस्म। सम्प्रति वाष्पगन्त्रीणां भूयस्तयाऽवश्यमेवाल्पतां गतोऽयं व्यापारविधिः।

साम्प्रतञ्च गङ्गाजलाद् विद्युदपि समुत्पाद्यते। यया हस्त-स्पर्शमात्रेणैव "तमसो मा ज्योतिर्गमये"ति वैदिकप्रार्थना अधिभौतिकरूपेण माभूत्, भौतिकरूपेण तु अक्षरशः सत्यतां याति। यथा रावणस्य भवने बन्दीभूतः सन् वायुः किङ्करतां गत आसीत्। तथैवास्माकं गृहेषु स विद्युता ग्रीष्मे शीतः, शीतकाले चोष्णः सन् कैङ्कर्यमावहति। विद्युदेव चलचित्राणां प्रधानतमं साधनम्। दासीवेयं विद्युदस्माकं गोधूमपेषणमपि विदधाति। व्यवसायगृहेषु—

वस्त्राणां भाण्डानामन्येषाञ्च पदार्थानां जायते भूयस्यां सङ्ख्यायां निर्माणम्। विद्युतैव एतदादीनि देवदुर्लभानि सुखानि अस्माकं सुलभतामुपगतानि।

अत एवाऽस्माकं पूर्वजैः गङ्गायाः स्मरणं स्नानं स्पर्शनम् आचमनम् अस्थिक्षेपणञ्च मोक्षदं स्मृतम्। संस्कृते हिन्दीभाषयाञ्च गंगाया महत्त्वबोधकानि महान्ति सुमनोहराणि स्तोत्राणि समुपलभ्यन्ते। संस्कृते भगवतः शङ्कराचार्यस्य 'गंगाष्टकम्' पण्डितराजजगन्नाथस्य च 'गंगालहरी' परममनोहरे। हिन्दीभाषायां हिन्दीजन्मदातुः भारतेन्दुहरिश्चन्द्रस्य 'गंगावर्णनम्' आलमपद्माकरादीनाञ्च गंगास्तुतिरत्यन्तं भक्तिपूर्णा वर्तते। आत्मानं लेखनीञ्च पावयितुं पञ्चषाणि पद्यानि समुद्ध्रियन्ते। भगवतः शङ्कराचार्यस्य—

"मातः! शैलसुतासपत्नि! वसुधाशृङ्गारहारावलि!
स्वर्गारोहणवैजयन्ति! भवतीं भागीरथीं प्रार्थये।
त्वत्तीरे वसतः त्वदम्बु पिबतः त्वद्वीचिषु प्रेङ्खतः।
त्वन्नाम स्मरतः त्वदर्पितदृशः स्यान्मे शरीरव्ययः॥

द्वे पण्डितराज-जगन्नाथस्य—

"तवालम्बादम्ब! स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञा–सरणिमथ नीताः सुरगणाः।
इदानीमौदास्यं यदि भजसि भागीरथि! तदा।
निराधारो हा रोदिमि कथय केषामिह पुरः॥
श्ववृत्तिव्यासङ्गो नियतमथ मिथ्या-प्रलपनम्
कुतर्केष्वभ्यासः सतत-पर-पैशुन्य-मननम्।
अपि श्रावं श्रावं मम तु पुनरेवं गुणगणान्।
ऋते त्वत् को नाम क्षणमपि निरीक्षेत वदनम्॥"

मुस्लिमकवेः आलमस्य—

नीके न्हाइ धोइ धूरि पैठो नेकु बैठो आनि।
धूरि जटि गई धूरिजटी लौं भवन में।
पैन्हि पैठो अम्बर सुनिकस्यो दिगम्बर ह्वे,
दृग देख्यो भाल में अचम्भो लाग्यो मन में॥
जैसो हर हिमकर धरे औ गरे गरल,
भारी घरु डर वरु छाँड्यो एक खन में।

देखे द्युति ना परत पाप रेते पा परत,
साप रेते सुरसरि ! साँप रेंगे तन में ॥"

महाकवेः पद्माकरस्य पद्यद्वयम्—

"आयो जौन तेरी धौरी धारा में धसत जात,
तिनको न होत सुरपुर में निपात है ।
कहै 'पद्माकर' तिहारो नाम जाके मुख-
ताके मुख अमृत को पुञ्ज सरसात है ।
तेरो तोय छ्वैकै औ छुवति तन जाको बात,
तिनकी चलै न जम लोकन में बात है ।
जहाँ-जहाँ मैया तेरी धूरि उड़ि जात गङ्गा,
तहाँ-तहाँ पापन की धूरि उड़ि जात है ॥
जमपुर द्वारे लागे तिनमें किवारे, कोऊ—
हैं न रखवारे ऐसे बन के उजारे हैं ।
कहै 'पद्माकर' तिहारे प्रन धारे तेउ,
करि अघभारे सुरलोक को सिधारे हैं ।
सुजन सुखारे करे पुन्य उजियारे अति,
पतित-कतारे भव सिन्धु तें उतारे हैं ।
काहू ने न तारे तिन्हें गंगा तुम तारे और
जेते तुम तारे तेते नभ में न तारे हैं ॥

अन्ते च उक्तकविवचसैव पातकानि घोषयित्वा-

"ए रे दगादार मेरे पातक अपार तोहि,
गंगा की कछार में पछारि छार करि हों" विरमामि ॥

## ( ३ ) गौः

### मातरः सर्वभूतानां गावः सर्वसुखप्रदाः

(भारतवर्षस्य सर्वस्वं गावः, गावो मातरः, गावः स्वस्त्ययनं महत् । गावः प्रतिष्ठाभूतानां गावः सर्वसुखप्रदाः,

सर्वमिदमत्राध्यक्षीक्रियताम्। प्रस्तावोऽयं पशुपरिचयात्मक-परिपाट्या समारब्धोऽपि परिणामे गम्भीरविचारात्मकरूपे परिसमाप्तः।)

गौरेकः चतुष्पात् पशुः। भूमण्डलस्य सर्वेष्वपि प्रायः प्रदेशेषु प्राप्यते। भवति सरला मुग्धा चास्या आकृतिः। तृणानि चरित्वाऽमृतमयं दुग्धं ददाति। अस्या वत्सा वृषा भूत्वा हलेषु शकटीषु शकटेषु च युज्यन्ते। आकृतयो वर्णाश्चाप्यासां दृश्यन्ते विभिन्नप्रकाराः। पर्वतप्रान्तेषु प्रायो ह्रस्वाकारा गावः तृणप्रायभोजनाः स्वल्पदुग्धाश्च। समतलप्रदेशेषु च बृहदाकाराः स्थूलाः तृणान्न-कार्पासबीजखल्यादि-स्निग्धप्राय-भोजनाः पर्याप्तदुग्धप्रदाश्च भवन्ति गावः। वर्णतश्च कृष्णाः कपिलाः श्वेताः रक्ताः पीताः कर्बुराश्चेति नैकविधाः। वृषाश्चापि ह्रस्वाकृतयो विशालाकाराः स्थूलाः कृशाङ्गा महाशृङ्गा लघुशृङ्गाः कृष्णाः कपिलाः श्वेता रक्ताः पीताः कर्बुराश्चेत्यनेकप्रकाराः। कृषिप्रधानस्य भारतवर्षस्य तु सर्वस्वं गाव एव। अत्र किमस्ति वस्तु यद् गवामेव कृपया नोत्पन्नं स्यात्,—सर्वप्रथमं जीवनौषधिरूपम् अन्नमेव गृह्यताम्—गोजाता वृषा हलैर्भूमिं कर्षयन्ति खनन्ति उर्वरां कुर्वन्ति, तैरेवोप्यन्ते क्षेत्राणि कूपेभ्यो जलमुद्धृत्य सिच्यन्ते। संपन्नं परिपक्वं च तत्सस्यं पुनस्तैरेव संशोध्यते गृहं प्रत्यानीयते च। को वाऽस्ति मानवो जगति योऽन्नं वस्त्रं वा विना जीवितुमपि शक्नुयात्। तदुभयमिदं भारतवर्षे तु गवामेव कृपया लभ्यते। कामं देशान्तरेषु यान्त्रिकैर्हलैरुष्ट्रादिभिर्वा पश्वन्तरैरपि पृथिवी कृष्येत खन्येत उप्येत चापि।

अन्नाद्व्यतिरिक्तं मानवजीवनोपयोगि सर्वमन्यदपि गाव एव प्रयच्छन्ति, पश्यत—जातमात्रस्य हि शिशोर्मातृस्तन्यादतिरिक्तं गोदुग्धमेव प्राथमिकं भोजनम्, येन स प्राप्नोति अवश्यप्रापणीयां शारीरिकीं पुष्टिम्। अथान्नभक्षणयोग्यो भूत्वापि अन्नैः सार्धं परमापेक्षितान् दुग्ध-दधि-घृतादीन् स्निग्धपदार्थान् लभते खलु गवामेवानुकम्पया। किञ्च गोजातानां वृषाणामेव कृपया लब्धानामिक्षुरस-गुड़-शर्करा-सितशर्करादीनां सम्मिश्रणेन प्रगुणीकृतैर्गव्यैरेव पायसघृतादिभिः सिद्धैरनेकविधैर्मिष्टान्नैः प्रतिदिवसमनुभवन्ति रसास्वादानन्दं सर्वे मनुष्याः। नास्ति मानवजीवनस्य कोऽपि भागो यत्र गोभिरुपकारो न

विधियते। अन्ते मरणकालेऽपि गोदानमेव पारलौकिक-श्रेयः साधकम्। एवमामूलचूलं मानवजीवनस्य पूर्णतया निर्वाहिका गौरेव, सर्वथा सत्यं चेदं वचः कस्यापि महापुरुषस्य--"गावः प्रतिष्ठा भूतानाम्" इति।

यथा माता पुत्रं सर्वतो रक्षति पालयति प्रीणयति, सर्वदा तस्मिन् स्निह्यति; न च कदापि विरज्यते पुत्रात्, तथा गौरपि मानवान् सर्वापद्भ्यो रक्षति पालयति प्रीणयति दुग्धादिना, स्निह्यति चान्तश्चेतसा, आशीर्वादैः संवर्धयति च। भर्त्सिता ताडिताऽपि नो विरज्यते सदा सुखमेव साधयति मानवसंसारस्य। अत एव "गावो विश्वस्य मातरः" उच्यन्ते। गाव एव च ऐहलौकिक-पारलौकिक-श्रेयःसाधनीभूतस्य धर्मस्य सर्वप्रधानम् अङ्गम्, गव्यैरेव पदार्थैः सम्पद्यते यज्ञः, गवामेव च दुग्ध-दधिघृतादिभिः सम्पन्नेन पञ्चामृतेन भवति पूजनं देवतानाम्,। प्रायश्चित्तेषु चान्तर्बहि शुद्धिमभीप्सुभिरुपयुज्यते गवामेव पयो-दधि-घृत-मूत्र-गोमयमयं पञ्चगव्यम्; इदम् अन्तःकरणमलानां कामक्रोधादीनां शारीरिकाणाञ्च धातुवैषम्यजनितानामतिदूषितानामपि रोगाणां परमं शोधकं निवारकञ्चास्ति। गोजातैर्वृषैरेवोत्पादितैर्यव-तिल-धान्य-शर्करादिभिर्निष्पादितैः हविर्भिरेव संसाध्यन्ते यज्ञाः; ततो वृष्टिर्वृष्टेरन्नं ततः प्रजा, इति सत्यतरमिदमुच्यते "गावः स्वस्त्ययनं महत्"।

पाश्चात्यविज्ञानशास्त्रिभिः परीक्ष्येदं निर्णीतं यद् गोदुग्धे सन्ति तानि सर्वाण्यपि तत्त्वानि यानि मानवजीवनाय परमोपयोगिनी, यानि च मानवस्य भोजनेऽपेक्ष्यन्ते। भारतीयायुर्वेदशास्त्रिभिश्च सर्वदुग्धेभ्यो गोदुग्धस्यैवोत्तमत्वमुद्घोष्यते सर्वेष्वपि रोगेषु क्रियते तस्यैवोपयोगः। उच्यते च गोदुग्धविषये—

"जरा-समस्तरोगाणां शान्तिकृत्सेविनां सदा॥"

गव्यं दधि नवनीतं घृतं चापि प्रशस्यतरं मन्यते यथा—

"उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम्"

"नवनीतं सुधातुल्यं विशेषादमृतं शिशोः"

गव्यं घृतम्—बलं ददाति, अग्निमान्द्यं हरति, त्रिदोषं नाशयति, अन्धत्वं दूरीकरोति, मेधां लावण्यं कान्तिं तेज ओजश्च वर्धयति, कृमीन् नाशयति, आयुष्करं परमरसायनं चास्ति।

गवां श्वासैरनन्ता रोगा विनश्यन्ति विशेषतश्च क्षयरोगः, क्षयरोगी गवां मध्ये वसन् नीरोगतामासादयति, हृद्रोगी च गवां दर्शनेन स्पर्शनेन तन्मध्यनिवासेन च सद्यो रोगात्तस्मात् विमुच्यते । गवां मूत्रं गोमयं चापि कियतां रोगाणामस्ति परमौषधम् । गोमूत्रेण प्रायः सर्वेऽपि उदररोगा विनश्यन्ति, आमवातस्य चेदं परिपूर्णमौषधम्; कृमिरोगाणाञ्च, महारोगस्य कुष्ठस्यापि सर्वोत्तममौषधमं गोमूत्रम् । गोमूत्रस्य निरन्तरपानेन स्नानेन च कुष्ठं सर्वथा विनश्यति । यकृत्प्लीहादीनामुदररोगाणान्तु प्रसिद्धमिदमौषधम् । गोमयं च पामादिचर्मरोगाणां सिद्धमौषधम् , संक्रामकरोगाणां कीटाणवश्चानेन नश्यन्ति, गोमयरसे विषूचिकारोगनाशिका विचित्रा शक्तिर्विद्यते इति पाश्चात्यविज्ञानिनोऽपि मन्यन्ते, । धर्मशास्त्रिणस्तु स्थाने स्थाने गोमयलेपनायाऽऽदिशन्ति; गोमयस्य गन्धेनैवासङ्ख्याः संक्रामकरोगाणां कीटाणवो विनश्यन्ति, नवीनानां च तेषां न भवत्युद्भवः । एवं प्राच्यायुर्वेददृष्ट्या पाश्चात्यविज्ञानदृष्ट्या च मानवानां स्वास्थ्यरक्षणविधौ विद्यते गवां सर्वोत्तमं स्थानम् ।

गौः परमः सात्त्विकः प्राणी तत्सेवया न केवलं शारीरिका एव रोगा विनश्यन्ति, अन्तःकरणस्यापि रोगा दूषिताः संस्कारास्तामसा भावाः क्लिष्टा वृत्तयश्च सर्वथा विनश्यन्ति,उदयमासादयन्ति च साधवः संस्कारा सात्त्विकाः भावा अक्लिष्टाश्च वृत्तयः । गवामेव सेवया लौकिकं पारलौकिकं च श्रेयो लब्धवन्तो बहव इति न परोक्षमितिहासचक्षुषां विदुषाम् । को न जानाति रघुवंशविभूषणस्य राज्ञो दिलीपस्य गोसेवाफलभूतां पुत्रप्राप्तिम् । सत्यकामस्य गौतमशिष्यस्य गोसेवया तत्त्वज्ञानप्राप्तिं च । सर्वमिदं गवां माहात्म्यं ज्ञानचक्षुषा निरीक्षमाणा महर्षयः शास्त्रेषु स्थाने स्थाने गवां महिमानं वर्णयामासुः, समीहन्ते स्म च—

"गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे सर्वतः सन्तु गवां मध्ये वसाम्यहम् ॥"

भारतीयानामस्माकं परमाराध्यो भगवान् श्रीकृष्णचन्द्रः समस्तदुष्टराजन्यासुरसंहाराय भूतलेऽवतीर्णः "सर्वा शारीरिकी मानसी च शक्तिर्गोमध्यनिवासेन गव्यदुग्ध-नवनीतानां सेवनेनैव च भवति पूर्णा" इति

शिक्षयन्निव बाल्यकाले व्रजवासमङ्गीचकार स्वयं गवां चारणेन पालनेन चादर्शमिमं भारतीयेभ्य उपास्थापयत्, गोपालो गोविन्द इति प्रियतरं नामधेयमुपाधिरूपे स्वीचकार।

भारतवर्षमिदं गां मातरं मन्यते, वस्तुतः सा मातैव, नास्त्यत्र कोऽपि संशयलेशः, सा हि सर्वानपि साम्येन पालयति न केवलं गोरक्षकेभ्यो हिन्दुभ्य एव ददाति सुखानि, किन्तु गोघातकेभ्यो यवनादिभ्योऽपि तथैव सा वितरति सर्वाणि सुखानि। हन्त! विदेशीया अद्य भारतस्य सर्वस्वभूतं गोधनं सहस्रशो विधिभिर्विनाशयन्तः सन्ति, गोमातुर्मांसभक्षणलोलुपास्ते भारतस्य लक्षशो गाः प्रत्यहं घ्नन्ति। न जाने बुद्धिरेषां कस्मिन् रसातले निविष्टा गवां सर्वानप्युपकारान् विस्मृत्य कुतस्तासां विनाशायैव सन्ति बद्धपरिकराः। मन्ये भारतवर्षमिदमेते सर्वथा नाशयितुमिच्छन्ति। यत्र हि भारते दधि-दुग्ध-घृतानां नद्य इव वहन्ति स्म तत्राद्य गवां रुधिरस्य नद्यो वहन्ति, दुग्धं दधि च स्वप्नायितं, घृतं तु स्वप्नेऽपि दुर्लभं जातम्। हा कष्टं कथमत्रत्या बाला बलिनो भवेयुः सर्वथा शुष्कभोजनभक्षिणामेषां कथं दीर्घम् आयुः स्यात्। साम्प्रतं गवां नाशेन दधि-दुग्ध-नवनीत-घृतादिस्निग्ध पदार्थानामभावेऽमांसाशिनी भारतीया प्रजाऽऽकारतोऽपि ह्रसिमानमापद्यमाना दृश्यते। अल्पबुद्धयोऽधर्मे धर्ममानिनः स्वल्पसामर्थ्याः पारस्परिककलहप्रिया जाजायमाना अवलोक्यन्ते जनाः।

कः पश्यति कश्च शृणोति, विदेशीयानां गौराङ्गप्रभूणां कृपया भारतीयस्य विशालतरस्य गोवंशस्य विनाशो जातः। स्वराज्यप्राप्तये राष्ट्रमहासभया (कांग्रेस) महदान्दोलनं क्रियते जोघुष्यते च, साम्प्रतम्—गौरांगा इमे भारतवर्षादपसरेयुः, इति। परमात्मा[1] शृणुयादिमां प्रार्थनाम् का सा शुभावेला भविष्यति यस्यामेते गोहत्याव्यसनिनो देशादस्मात्सर्वथाऽपसृता भवेयुः। आशास्महे भविष्यति तदा भारतीयगोवंशस्य रक्षा, समृद्धं च राष्ट्रं शोभनानि दिनानि द्रक्ष्यति। यत्र पूर्ववत् दधि-दुग्ध-नवनीत-घृतादीनां नद्यः प्रवक्ष्यन्ति, प्रजाश्चात्रत्या हृष्टाः पुष्टाः सूक्ष्मबुद्धयो विशालाकाराः सुन्दरवर्णाः

(१) परमोऽयं हर्षस्य विषयः श्रुता परमात्मना अस्माकं प्रार्थना, गताः खलु गौराङ्गा भारतात्।

पारतन्त्र्यविमुक्ताः सुखं वत्स्यन्ति । निवर्त्स्यति गोहत्या, प्रसन्नाश्च गाव आशीर्वादं दास्यन्ति । गवां कृपया पुनः समृद्धिमासाद्य भारतमिदं समस्तस्यापि संसारस्य समक्षे सिद्धान्तमिममुपस्थापयितुं शक्ष्यति—

"मातरः सर्वभूतानां गावः सर्वसुखप्रदाः"

---

## ( ४ ) विद्यालयः

[ प्रस्तावोऽयं संस्थापरिचयात्मकः । पूर्वार्धे औपन्यासिकभाषया विद्यालयस्य साधारणपरिचयः प्रादायि । उत्तरार्धे च विवरणविधया तस्यैव विस्तृतः परिचयो दत्तः । तदेतेन शिक्षणीयमेतत्प्रस्तावशिक्षार्थिभिर्यद् विद्यालयादिसंस्थानां कथं दीयते परिचयः कथं च लिख्यते तद् विवरणमिति । ]

१

मार्गशीर्षो मासः, सार्धदश-वादनसमय एव भुक्त्वा भोजनं गृहात् निरगमं भ्रमणाय । अद्य नासीन्मम कार्यान्तरोपरोधः । नवागतोहम् , अपरिचितप्रायो नगर-निवासि-जनस्य,एकाकी राजमार्गे पूर्वतोऽचलम् । अथ नातिदूर एव वामतः सुन्दरोद्यान-मध्यगतम् उपरिदोधूयमान-पताकं सुधाधवलं विशालं सौधमेकमदृश्यत । किमिदमिति चिन्तयत्येव मयि टन् टन् टन् टन्निति समश्रावि घण्टिकानादः । अतिसाधारण-शान्तवेषाः करकलित-पुस्तकनिकरा विद्यार्थिनो धावं धावं तत एव व्रजन्ति । प्रथमेयं घण्टिका किमिति मुधा धावसि । टन् टन् टन्निति पुनरभून्नादः । अरे ! त्वर्यतां जातोऽयं द्वितीयो नादः । अनुपस्थितौ पतिष्यति दण्डः, सर्वे त्वरया प्रविष्टाः ।

अहमपि तद्दर्शन-कौतुकी प्राविशं प्रधानद्वारेण, पुरोऽपश्यञ्च, उपस्थितिपञ्जिकामादाय द्वावध्यापकौ प्रत्येकं नामधेयमुच्चैरुच्चारयतः, विद्यार्थिनश्च 'श्रीमन्तोऽस्मि' 'उपस्थितोऽस्मि' इत्यादि–वचसा स्वामुपस्थितिं बोधयन्तः पंक्तिबद्धाः शान्तास्तिष्ठन्ति । सर्वे सम्मिलिताः स्वस्तिप्रार्थनामन्त्रान् वैदिकान् मन्द्रगम्भीरेण स्वरेणाघोषयन् ।

तावदहं महाभवन-मस्तके क्रमशो लिखितैः कृष्णवर्णैः स्थूलस्थूलैरक्षरैः पर्यचैषम । यदेपोऽस्ति "श्रीसरस्वती-संस्कृत-विद्यालयः" श्रुतपूर्वोऽयं

मम। एतच्चाऽस्य प्रधानं विशालभवनं "श्रीकृष्णगीताभवन" नाम। पाश्चात्यसभ्यता-पाशपतितस्यापि मम संस्कृत-भाषा-प्रणयितया अत्रत्य-परमशान्त-सर्वथाऽकृत्रिम-साधारण-वेषभूषा-सन्दर्शन-सञ्जात-सद्भावतया च परमं कुतूहलमुदपादि एतस्य समस्त-परिचयप्राप्तये।

"टन्" सर्वे विद्यार्थिनः स्व-स्व-श्रेणीस्थाने समुपविष्टाः प्रवृत्ताश्च सर्वेऽध्यापका अध्यापयितुम्। उपविष्टोऽहमपि शिलायामेकस्याम्। अथाऽसन् कतिचन स्वतन्त्रा इतस्ततो वृक्षतलेषु हसन्तो हासयन्तश्च भ्राम्यन्ति। विज्ञातं प्रश्नेन यदेषाऽस्ति प्रथम-शास्त्रिश्रेणी घण्टिकायामस्यां स्वतन्त्रा। नास्ति पठनसमयोऽयमस्याः। तेषु खल्वेको ममाभिमुखमायात्। आगम्यताम्, आस्यताम् भो भद्र! इति सादरमभ्यर्थितो मम पार्श्वे समुपाविशत्। कौतुकपरवशेन मया प्रश्नपरम्परया लब्धो विद्यालयस्य सर्वोऽपि परिचयः। "टन् टन्" सहसा सावधानीभूय सह सहाध्यायिभिः पुस्तकान्यादाय अध्ययनाय प्रायात् सः।

रामणीयकमत्रत्यं दिदृक्षुरहमुपरिभागे गतोऽवालोकयन् पुरोभित्तिकायामेवाऽस्ति सुन्दरं लघुमन्दिरम्। यत्र वेणुपाणिः सुस्निग्धः-श्यामवर्णा कमल-दल-विशाल-नयना स्मितवदना त्रिभङ्गीललितावस्थाना परमरमणीया बलान्मानसे विशन्तीव भगवतो मनोमोहनस्य मधुरतरा मूर्तिः, वामतश्चास्या विराजते गौरवर्णा स्मितविकसित-वदनारविन्दा परममनोरमाकृतिः भगवती रासेश्वरी।

भगवद्दर्शन-सञ्जात-विपुलाऽऽह्लादस्ततोऽहं परावृत्य सर्वाणि भवनानि इतराणि कोष्ठकानि पशुशाला-कूपाराम-वृक्षलता-क्षेत्रादिकञ्च दृष्टवान्

पृष्टं मया कियत्समयावधि भवति पठन-पाठनम्, आचार्य-साक्षात्कारश्च कदा शक्यते कर्त्तुम्। उत्तरे ज्ञातं चतुर्वादनसमये भविष्यत्यवकाशः, आचार्यस्य दशमी घण्टिका रिक्ता, तदैवोचितश्च साक्षात्कारः। अवकाशानन्तरञ्च न तिष्ठति क्षणमपि स विद्यालये। लब्धो मया समयः समेषामध्यापकानाम् अध्यापनश्रवणस्य, प्राप्तश्च तन्नामधेयादिपरिचयः छात्रेभ्यः। मध्ये मध्ये रिक्तसमयेषु सञ्जातः साक्षात् परिचयोऽपि तेषाम्। 'टन् टन् टन्......' इति जातो घण्टिकानादः। परिगणिता मया नवाऽऽसन्। आः;

दशमीयं वेला, प्राप्त आचार्यसाक्षात्कार-समयः। छात्रसङ्केतानुसारम् आचार्य-भवनाभिमुखमागमम्। वेत्रासनमध्यासीन आचार्यः समाचारपत्रं पठति। द्वारगतञ्च मां ग्रीवामुन्नमय्य वीक्ष्य यावत् पिपृच्छिषति किञ्चित् तावदेव विहितशिष्टाचारोऽहं "शक्नोम्यन्तराऽऽगन्तु" मिति प्रार्थयम्। आम्! आगम्यताम्, आस्यतामित्यपरिचितचरोऽपि आसन्द्यामुपवेष्टमादिष्टः। आचार्यकृत-सविनय-शिष्टाचारसङ्कुचितोऽहमुपविष्टः। समारभ्यत वार्तालापो विद्यालयस्यैव विषये। घण्टार्धमात्रे एव सर्वोऽपि स्थापनकालादद्यावधि विद्यालयेतिहासः, प्रश्नपरम्परयाऽधिगतो मया। आचार्य-वर्येण च परमसौहार्देन नोद्वेगमावहता सर्वं परिचायितं, पूर्व-लिखितं समस्तं विवरण-जातमपि दर्शितम्। परीक्षापरिणामाः, प्रबन्ध-समितिः, अध्यापक-वर्गः विद्यालय-सम्पत्तिः, छात्रावासः, इत्यादिषु नातिष्ठदवशिष्टो विषयः, यत्राऽहं नाभूवं पूर्णपरिचितः। अस्तु, क्षम्यतां बहुसमयो युष्मदीयो मया गृहीतः, मम जिज्ञासाः सर्वा अपि श्रीमद्भिः परिपूरिता इति तदर्थं धन्यवादः, दीयतामाज्ञा, भवतामपि जातः पुनरध्यापन-समयः। 'ओम्!'

बहिरागत्याऽऽचार्यभवनात् शिलायामेवोपाविशम्। अचिन्तयञ्च श्रुतपूर्वं तमेव विद्यालय-परिचयम्। अथाऽभूदवकाश-घण्टिकानादः। टन् टन् टन् टन्......इति। सोल्लासं कारामुक्ता इव सहर्षं गन्तुमारभन्त विद्यार्थिनः। अथागत एकश्छात्रः प्राङ्गणभूमौ निखातयोर्वंशस्तम्भयोरुपरि-भागे दृढसूत्र-ग्रथितं जालमतानीत्। इतरौ रबरकन्दुके वायुपूरिण्या वायुमापूरयतः। क्रमेण त्रयः, पञ्च, अष्टौ, दश, पञ्चदश, विंशतिः छात्राः समागताः। सर्वे हृष्टपुष्टशरीरा विकसितवदना नवयुवका भद्रवेषा झटिति सङ्घद्वये विभक्ता इतस्ततश्चोपस्थिताः। कन्दुकोत्फालनक्रीडामारब्धवन्तः। अहम-प्यासं तत्क्रीडाव्यसनी, पश्येयं कथं क्रीडन्तीति स्थितः। ऊर्ध्वदृष्टयः उत्प्लुत्योत्प्लुत्य जालमुभयत उत्फालयन्ति कन्दुकम्। ब्रवीति चैक उच्चैः— 'शून्यमेकम्' 'एकं द्वे' 'द्वे त्रीणि' 'बहिस्सीमम्' 'नहि, नहि अन्तस्सीमम्' सावधानम्—गृह्यताम्, जालस्पर्शः, सप्तदश-एकादश-पञ्चदश, आः! चतुः-स्पर्शः, सप्तदश विंशतिः, हन्त! विजयिनो वयमिति सकरतलध्वनि हसन्ति। गम्यतामितः प्रारभ्यतां पुनरिति क्रियासमभिहारेण पारस्परिक-

स्खलन-गणनातत्पराः पाश्चात्यामपीमां क्रीडां संस्कृतशब्दमयीं प्राच्यामिव सम्पादयन्तः क्रीडन्ति। अस्तं गतो भगवान् भास्करः। अभूत् क्रीडा-विराम-नादः। सन्ध्यामुपासितुं गताः सर्वे। मामन्विष्यन् समागतः सुहृद् रमाकान्तः। आगम्यताम्, गृहं गच्छाव, क्व व्यतियापितं सर्वं दिनम्? अहन्तु एतयैव वाष्प-गन्त्र्या समागतः, गृहं गतश्च ज्ञातवान् नागतोऽसि भ्रमणाय निर्गतः इदानीं यावत्। परस्परमालपन्तावावां गृहमागतवन्तौ।

रमाकान्तस्य विशेषानुरोधात् आत्मनश्चापि विद्यालयसम्बन्धि-व्यक्ति-विशेष-साक्षात्कार-कौतुकात् परेऽहनि सोमवासरेऽपि प्रस्थातुं ततो न प्राभवम्। कृतवाँश्च साक्षात्कारम् अन्तरङ्गप्रबन्धकृतः श्रीदैवज्ञवर्यस्य। विद्या-लय-संस्थापकस्य श्रीपण्डितरवि (दत्त) नन्दनशर्मणः कर्मकाण्डप्रभाकरस्य, तथा महामहिम-शालिनः आदर्शमहात्मनो विद्यालय-संरक्षकस्य श्री १००८ श्रीत्रिवेणीपुरीजी-महाराजस्य। विद्यालय-प्रबन्ध-समिति-मन्त्रिणः सभा-पतिमहोदयस्याऽपि प्राप्तः साक्षात्परिचयः। छात्रावास-छात्रसङ्घ-स्नातकम-ण्डलादीनां विद्यालय-सम्बन्धिनां समस्तपरिचयश्च। महान् मे जातो मनसि विद्यालयस्य प्रभावः। दास्यामि परिचयमेतं समाचारपत्रे। शृणोषि भो! कृष्णकान्त! आः सुप्तोऽयम्। जातो निशीथः। स्वपिमि तावदहमपि।

\+ \+ \+ \+ \+

पठन्नन्तरात्मना भृशं मोदमानः सोमनाथवर्मा ब्रूते—"मित्र हरि-शर्मन्! पश्य अद्यास्मिन्नवागते समाचारपत्रेऽस्माकमेव विद्यालयस्य प्रदत्तः केनापि प्रत्यक्षदर्शिना सर्वाङ्गीणः परिचयो विवरणात्मकः,। न जाने कोऽयं प्रत्यक्षदर्शी। गृह्यताम् अवश्यं पठ्यतां रमणीयतरोऽयं लेखः"

\+ \+ \+

२

सरस्वती श्रुतिमहती महीयताम्

## श्रीसरस्वती-संस्कृत-कालेजः, खन्ना।

अयमस्ति एक आदर्शसंस्कृतविद्यालयः। नगरान्नातिदूरे पूर्वतो राजमार्गस्य वामतः परमरमणीये जनकोलाहलविरहिते अतिपावनपवने

प्रथमवर्षीया द्वितीयवर्षीया चेति सम्पद्यन्ते षट्। प्रवेशिकाविभागश्च पृथक्।

अध्यापकवर्गः। अध्यापकाश्च विद्यन्ते षडेव। सर्वे सुयोग्या विद्वांसः सोत्साहाः कार्यकर्तारः। आचार्यवर्जं सर्वे एतद्विद्यालयस्यैव स्नातकाः सतीर्थ्याश्चेत्यहो सौभाग्यं तेषाम्। विद्यामधीत्यैकत्र संवासो भवति केषामेव भाग्यवतां सतीर्थ्यानाम्। आत्मीया मातृसंस्थेयमिति बहु स्निह्यन्ति, परमया च सहानुभूत्या कुर्वन्ति कार्यम्। सर्वे शास्त्रिणो विद्यालङ्काराः, ऋते विद्याभूषणादेकस्मात्। त्रयः प्रभाकराः हिन्दीपरीक्षाभिः, आचार्यश्च जात्या प्रभाकरः। उपाचार्यश्च साहित्याचार्योऽपि।

१. **आचार्यश्च** एतद्विद्यालयस्यास्ति श्रीपण्डितविश्वनाथशास्त्री प्रभाकरो होश्यारपुर–मण्डलान्तर्गत–जेजों नगरनिवासी प्रसिद्धपण्डितकुलप्रसूतः लघुशरीरोऽपि भव्यप्रभावो मृदुतरस्वभावश्च। १९२३ ख्रीष्टाब्दात् पदमेतदधिष्ठितः परमयोग्यतया निर्वहति कार्यजातम्। २. **उपाचार्यः** श्री पं० यशोदेवशास्त्री साहित्याचार्यो हिन्दीप्रभाकरो विद्यालङ्कारो नाभाराज्य-वास्तव्यः। ३. **प्रोपाध्यायः** श्री पं० निगमानन्दः शास्त्री हिन्दीप्रभाकरो विद्यालङ्कारः कविकान्तः पटियालाराज्यवास्तव्यः। ४. **प्रोपाध्यायः** श्री पं० श्रीनिवासशर्मा विद्याभूषण एतन्नगरवास्तव्य एव। ५. **प्रोपाध्यायः** श्री पं० चिरञ्जीविशास्त्री हिन्दीप्रभाकरो विद्यालङ्कारो मैट्रिकपरीक्षोत्तीर्णश्च। अयमपि स्थानीय एव। ६. **प्रोपाध्ययाः** श्री पं० देशराजशास्त्री विद्यालङ्कारो हिसारमण्डलवास्तव्यः।

प्रबन्धसमितिः। प्रबन्धश्चास्य सर्वोऽपि साम्प्रतं नियमानुसार-निर्वाचित-प्रबन्धसमित्यधीनः। एषा च समिति राजनियमानुसारं विद्यते राजस्वीकृता। प्रधानश्चास्या अद्यत्वे श्री पं० हंसराजदत्तः लक्ष्मी-कार्पास-महायन्त्र-प्रधानप्रबन्धकर्ता। अस्य चास्ति विद्यालयकार्ये परमो मनोयोगः। अतिशयेन च प्रेम्णा करोति कार्यम। अयमुदार-स्वभाव उत्साही कार्यकर्ता प्रभावशाली चापि। मन्त्री चास्ति

समितेरस्याः श्री पं० रमेशचन्द्र शर्मा वासिष्ठः ( बी ए. एल एल. बी. ) नगर-रक्षा-समिति-सदस्यः ( म्युनिसिपल कमिश्नर ) लोहयन्त्राध्यक्षः। एष उत्साही नवयुवको नासमीक्ष्यकारी मृदुप्रकृतिरुन्नतिकामः साधु वहति विद्यालयस्य कार्यभारम्।

अथ विद्यालयस्यैतस्य लक्षशोरूप्यकमूल्या विद्यते स्थायि-सम्पत्तिः। या वितीर्णाऽऽसीत् श्रीचौधरी-रोलूरामतनुजन्मना श्रीचौधरी भगवान्सिंहमहाभागेन। यतो लभ्यन्ते प्रतिमासं स्थानीयवस्त्वागार-निवासभवनादि-शुल्क–रूप्यकाणि। दिल्लीस्थ-निवास-भवन-शुल्करूप्यकाणि च। ददाति मासिकीं सहायतां स्थानीय-व्यापारिवर्गः, सामयिकीञ्चाऽन्नादिरूपां विशिष्टाम्। श्री १०८ स्वामि त्रिवेणीपुरीजी महाराजश्च समये समये सहस्रशो रूप्यकाणां विदधाति साहाय्यम्। अतश्चैवं सहस्रशो रूप्यकाणां वार्षिको व्ययः, नास्ति कष्टकरः साम्प्रतं प्रबन्धक-वर्गस्येति साधीयसी खलु विद्यालयस्याऽऽर्थिकी दशापि।

स्थायिसम्पत्तिः आयमार्गः।

अध्यापकानां वेतनानि चापि न सन्ति सर्वथा स्वल्पानि। प्रदर्शित-मत्रापि औदार्यमधिकारिवर्गेण। क्रमिक वृद्धयो। ( ग्रेड ) विद्यन्ते नियती-कृताः। प्रवर्तिता पश्चात्प्राप्य-सुरक्षित-धनराशि-प्रथापि ( प्राविडण्ट फण्ड शिष्टम ) दत्तं महर्घता-भक्तञ्चापि।

विद्यालयोऽयं पञ्चाम्बु-विश्वविद्यालय-स्वीकृतः। सम्बद्धश्च विश्व-विद्यालय-सञ्चालित-प्राच्यमहाविद्यालयेन। अत्रत्य-स्वास्थ्य-प्रद-जलवायु-प्रभावेण इदं विद्यालयीयाश्छात्रा हृष्टपुष्टशरीराः सन्ति नीरोगाश्च। प्रतिवर्षं विद्यालयादस्माद् आसन्नषष्टिर्वि-द्यार्थिनो विश्वविद्यालयीय-परीक्षासूपविशन्ति। परमसन्तु-ष्टिप्रदाश्च भवन्ति परीक्षा-परिणामाः। विगतसंवत्सरे श्रीहरिश्चन्द्रशर्मा 'ऋषिः' शास्त्रिपरीक्षायां प्रान्ते सर्वं प्रथमः संवृतः। अस्मिश्चापि वर्षे श्रीकालिचरणशर्मा 'गौतमः' विशारद-परीक्षायां प्रान्ते द्वितीयोऽतिष्ठत्। प्रतिश्रेणि प्रथमाय द्वितीयस्मै च दीयते पारितोषिकम्। प्रान्ते सर्वप्रथमाय

पञ्चाम्बु-विश्वविद्यालय-सम्बन्धः, परीक्षा-परिणामः, केन्द्र-स्वीकृतिः।

द्वितीयस्मै च स्वर्णपदकं "सरस्वती-पदकम्" नाम। योग्यता-परीक्षासु चापि उत्तमोत्तीर्णेभ्यो वितीर्यते पारितोषिकम्। पर्याप्तामत्रत्यां परीक्षार्थि-सङ्ख्यां निरीक्ष्य संस्कृत-परीक्षा-केन्द्रमपि नगरेऽस्मिन् स्वीकृतं विश्वविद्यालयेन। निवृत्तो येन परीक्षायै केन्द्रान्तरगमनक्लेशः।

प्रात्यहिकोऽध्यापनसमयो होरापञ्चकम्। मध्ये च घटिकार्धमात्रं भवति विश्रामः। शीतकाले एकादशवादनतश्चतुर्वादनपर्यन्तम्; ग्रीष्मकाले च सप्तवादनतो द्वादशवादनपर्यन्तं भवत्यध्यापनसमयः।

अध्यापनसमयः, साप्ताहिकश्चावकाशो भवति प्रतिपदि अष्टम्याञ्च, न तु

अवकाशाश्च। रविवासरे। वर्षतौं च प्रायो मासद्वयस्य जायते महावकाशः। आर्यव्रतोत्सवाद्यवकाशाश्च सन्त्येव नियताः।

विद्यार्थिनोऽत्रत्याः क्रीडन्ति विविधाभिः पाश्चात्याभिः प्राच्याभिश्च क्रीडाभिः। कुर्वन्ति च दण्डव्यायामम् उत्तिष्ठोपविशा-

क्रीडा व्यायामश्च। व्यायामञ्चापि। क्रीडासु च कन्दुकोत्फालन (वालीवाल) पादकन्दुक (फुटवाल) कुपादिका (कवड्डी) प्रभृतयः प्रचलन्ति। पाश्चात्यासु चापि शब्दप्रयोगः प्रायः संस्कृतमय एव क्रियते। यथा—

| | |
|---|---|
| (१) सावधानम् (रेडी) | (४) चतुःस्पर्शः (फोरटच्) |
| (२) बहिःसीमम् (औट् साइड्) | (५) जालस्पर्शः (नट्टच्) |
| (३) अन्तस्सीमम् (इन्साइड्) | (६) रवरकन्दुकम् (बाल) |

सङ्ख्यापि स्खलनानां संस्कृतभाषयैवोद्घोष्यते—

एकं, द्वे········पञ्च, सप्त·········एकादश, पञ्चदश················ पञ्चदश, विंशतिः।

इतोऽधीतविद्याः स्नातका यत्र तत्राङ्ग्ल-विद्यालयेषु चाऽध्यापयन्तः सुरसरस्वतीप्रचारमाचरन्ति। केचिच्चायुर्वेदपरीक्षाः समुत्तीर्य लोकसेवा-कार्ये प्रवृत्ताः संस्कृतायुर्वेदप्रचारपुण्यं लभन्ते, विद्यालय-

स्नातकमण्डलम्। सेवायै चैषां विद्यते स्नातक-मण्डलम् नाम सुसङ्घटिता संस्था। ददति च सर्वे स्नातकास्तत्सदस्या वार्षिकीं नियतां सहायताम्। धनमेतन्नियमितरूपेण सुरक्षितं तिष्ठति राजकीय-

पत्रालयसम्बन्धिनि कोषे (पोस्ट आफिस सैविङ्ग बैङ्क)। मण्डलनिर्णयानुसारञ्च विद्यालयस्यैव कार्यविशेषे व्ययीक्रियते। विद्यालयस्य नवीनभवननिर्माणे भूयसी ह्याचरिता सहायता मण्डलेन। भूमिरपि क्रीत्वा वितीर्णा विद्यालयाय। स्नातकमण्डलस्यैकः प्रतिनिधिः विद्यालयप्रबन्धक-समितावपि भवत्येव। निर्वाचने च सन्ति सर्वे स्नातका अधिकारिणः। प्रतिवर्षं भवति स्नातकमण्डलस्य सम्मेलनम्। नवीनस्नातकेभ्यश्च वितीर्यन्ते सम्मानपत्राणि, विद्यालङ्काराद्या उपाधयश्च।

**छात्रसङ्घः।**

विद्यालयस्याऽस्य विद्यार्थिनामप्यस्ति सुसङ्घटितः सङ्घः 'छात्रसङ्घो' नाम। प्रतित्रयोदशि भवत्यस्याधिवेशनम्। यत्र कुर्वन्ति भाषणानि विद्यार्थिनः, क्रियन्ते गानानि विचाराश्च विद्यार्थिहितसाधकाः। अध्यापकानां च भवन्ति परमोपयोगीनि प्रवचनानि। एतेन भवन्ति भूयांसो लाभाः—विद्यार्थिनां भवति भाषणाभ्यासः, निवार्यते सङ्कोचः, प्राप्यते चाऽऽचारशिक्षा। लभ्यते विनोदः, जायते चेतसः सम्प्रसादश्च। वर्तमान-संसार-समाचाराणां भवति परिचयः, व्यवहारकुशलता च।

**पुस्तकालयः, वाचनालयश्च।**

विद्यालयेऽस्मिन् अस्त्येको लघु पुस्तकालयोऽपि 'सरस्वती-पुस्तकालयाभिधानः'। यत्र सन्ति सर्वविधानि प्राचीनार्वाचीन-संस्कृत-हिन्दी-पुस्तकानि शतशः लभन्ते, येभ्यो लाभं विद्यार्थिनोऽध्यापकाश्च सर्वे। वाचनालय-विभागे च समायान्ति दैनिक-साप्ताहिक-मासिकानि पञ्चषाणि हिन्दी-संस्कृत-समाचार-पत्राणि।

**शुभाशंसनम्।**

एवं सर्वैरपि प्रकारैरस्ति परिपूर्णाङ्गोऽयं विद्यालयः। स्वगुणैश्च महानगरवर्तिनामपि संस्कृत-महाविद्यालयानां विद्यते प्रतिस्पर्धी। स्वभावसिद्धैश्च कैश्चिद् हेतुभिस्तान् अतिशेतेऽपि। अधिकारिणश्चेदमीयाः परमोन्नतिपदाधिरूढमेनं दिदृक्षन्ते, कामयन्ते च कर्मकाण्डविभागम् आयुर्वेदविभागं चापि स्थापयितुम्। अध्यापन-शिक्षण-विभागोऽपि प्रचालयितुमिष्टः केषाञ्चित्, आङ्ग्लशिक्षापि दीयेत सहैव, इत्यपि विद्यते विचारः। छात्रावासभवनमपि बहिर्विद्यालय-

भवनस्य सन्निधौ निर्मीयेत इत्येतदादि सर्वमस्ति आशंसितम्। भगवत्कृपायाः समक्षे च नास्तीदं सर्वमसम्भवं विलम्बसम्भवि वा, सर्वथाऽतर्कितां श्रीपरमात्मकृपासंसिद्धामाशातिशयिनीं जञ्जन्यमानामस्य क्रमोन्नतिं संवीक्ष्य तु विश्वसिति हृदयं 'परमेश्वरानुकम्पयाऽवश्यं कदाचिदयं संस्कृत-विश्वविद्यालयोऽपि भवेदेव"। निरीक्ष्य चैनं सर्वगुण-सम्पन्नं को न व्याहरेद् आदर्श-विद्यालयोऽयं **श्रीसरस्वती संस्कृत-कालेजः**। गम्भीरतरमस्योद्देश्यं शुभाशंसनञ्चसंसूचयति शिरोनिहितं शाकुन्तलीयं भरतवाक्यमेतत्—

"सरस्वती श्रुतिमहती महीयताम्"। इति। १५।११।४५

**प्रत्यत्तदर्शी**

---

# ( ५ ) विजयदशमी।

## ( ले० श्री पं० प्रकाशचन्द्रशास्त्री विद्यालङ्कारः कविकान्तो हिन्दीप्रभाकरः )

[ भारते सर्वमान्यो विशिष्टतरोऽयं विजय-दशमी-महोत्सवः, प्रस्तावोऽयं तद्विषयक-संक्षिप्तपरिचयात्मकः। उत्सव-समारोहादि-विषयक-साधारण-संक्षिप्त-प्रस्तावनामादर्शः। ]

यद्यपि परिपूर्णः समस्तोऽपि संवत्सरो विविधैरुत्सवैः, तथाऽपि चत्वार एव प्रधाना उत्सवाश्चतुर्णामपि वर्णानाम्। तद्यथा ब्राह्मणानां श्रावणी, वैश्यानां दीपमाला, शूद्राणां होलिका, तथा क्षत्रियाणामेषा विजयादशमी। प्रतिवत्सरमुत्सवविशेषोऽयमाश्विनमासस्य सिते पक्षे दशम्यां महता समारोहेण मान्यते भारतीयैः। नगरे नगरे मेला भवन्ति। परम-दर्शनीयो भवति विजयदशम्युत्सवस्य समारोहः।

वर्षर्तुना प्रायो भवति सर्वे नृपादयो यात्रातो निरुद्धाः। तृणजालकैर्जलैश्च पन्थानो जायन्ते लुप्तप्रायाः। अत एव कथितं महाकविना वाल्मीकिना वर्षावर्णने—"स्थिता हि यात्रा वसुधाधिपानां प्रवासिनो यान्ति नराः स्वदेशान्"।

अनेन वृष्टेरुत्पातेन सर्वे दुःखिता आसन् आश्विनशुक्लदशमीपर्यन्तमेते उत्पाता भवन्ति शान्ताः, आकाशो निर्मलो भवति, स्वच्छा जायन्ते पन्थानः, नदीकूपतडागानां जलं पूर्वावस्थामायाति। अतो यात्रार्थमयं कालः शोभनोऽतीव विजयदायकश्च। विजयेच्छुभिरस्मिन्नेव विजययात्रा विधीयते। चिन्तामणिग्रन्थकर्त्रा त्वस्या विजयदशम्याः कालस्य नामैव "विजयः" इति धृतम्—

आश्विनस्य सिते पक्षे, दशम्यां तारकोदये।
स कालो विजयो नाम सर्वकामार्थसाधकः॥"

अर्थात्—अयं कालो विजयकारकः। अस्मिन्नेव विजयेच्छुभिः शत्रुविजयार्थं तथा चान्यकार्यसिद्ध्यर्थं च प्रयाणं कर्तव्यम्। ततश्च कार्ये शत्रौ वा सफलता विजयो वा निश्चित एव। अत एव सीतामाहृत्य लङ्कां समाश्रितवतो रावणस्य विजयार्थं सतीहरणपापस्य दण्डदानाय राघवोऽस्मिन्नेव दिवसे विजययात्रां चकार। विजयदशम्या द्वितीयं नामधेयं "दशहरा" इति, अत्र प्रमाणं रावणस्य दश शिरांसि हर्तुं श्रीरामचन्द्रेणास्मिन् दिने प्रयाणं कृतमत एवस्योत्सवस्य "दशहरा" इति नाम बभूव।

तथा च शुम्भ-निशुम्भासुर-भयविभ्रान्ते जगति सुरप्रार्थनयास्मिन्नेवाश्विनशुक्लदशमीदिने प्रादुर्बभूव शुम्भनिशुम्भमर्दिनी महादुर्गा। अतएव विजयदशम्याः पूर्वं नवरात्रेषु दुर्गापूजनं भवति अत एवोत्सवोऽयं विजयदायकः, विजयस्मारकश्च मान्यंते च आधुनिकैर्महता समारोहेण प्रतिवर्षम्।

न केवलमाधुनिका एव, पूर्वजा अपि महता समारोहेणैनं विजयोत्सवं मानयन्ति स्म, भविष्योत्तरपुराणे श्रीकृष्णो युधिष्ठिरं प्रति विजयदशम्या उत्सवप्रकारमेवं वर्णयति—

"अलङ्कृतो भूषितभृत्यवर्गः परिष्कृतोत्तुङ्गतरङ्गनागः।
वादित्रनादप्रतिनादिताशः सुमङ्गलाचारपरम्पराशीः॥"

भृत्यवर्गैः सार्धं स्वयमलङ्कृतो नृपो हस्त्यश्वान् समलङ्कृत्य गायन् वादयन् मंगलाचारं कुर्यात्। तथा च स्वपुरोहितं पुरस्कृत्य स्वनगरसीमापारे गत्वा तत्र शत्रोः प्रतिकृतिं विधाय तस्या हृदयं बाणैर्विद्ध्येत्। पुरोहितो मन्त्रोच्चारणं कुर्यात्। विजयदशम्यामेवं कुर्वन् नृपः कदापि पराजयं न

प्राप्नोति, प्रतीयतेऽनेनायमुत्सवो बहुप्राचीनः। न केवलं प्रजाः, नृपा अपि अस्मिन् विशेषपात्राण्यासन्।

अद्यत्वेऽपि तथैव सर्वत्र भारतेयं विजयदशम्या उत्सवो मान्यते। क्षत्रियाः स्वास्त्राणि पूजयन्ति। गृहे गृहे दुर्गापूजनं भवति। स्वराज्ये राजानः समलङ्कृत्याऽलङ्कृते गजे समारुह्य निर्गच्छन्ति। प्रतिनगरं मेला भवन्ति। दूरदूरस्था अपि जनास्तत्र सम्मिलन्ति। नूतनानि वस्त्राणि परिधाय प्रमुदिता अभिनवरचितासु पण्यवीथिषु भ्रमन्ति, किञ्चित् क्रीणन्ति, किञ्चित् भक्षयन्ति, केचिद् गायन्ति, नृत्यन्ति, तथान्ये निष्फलकोलाहलैरेव हर्षोत्कर्षमाविष्कुर्वन्ति।

नगराद् बहिर्विस्तृतक्षेत्रे कृत्रिमैका लङ्का निर्मीयते। वंशैः कर्गलै रावण-कुम्भकर्ण-मेघनादादीनां प्रतिकृतयो विरचय्य तत्रावस्थाप्यन्ते सूर्यास्तसमयेऽखिलो जनसमुदायः प्रतिकृतीरभितो वर्तुलीभूय तिष्ठति। अथ रावणादिवधस्याभिनयो भवति। धृतरामलक्ष्मणवेषौ गृहीतकार्मुकौ द्वौ सुन्दरौ बालकौ तत्र क्षेत्रे समागत्य तेषां कृत्रिम-रावणादीनां हृदयं बाणैर्विध्यन्ति। तदा रावणादयो मृता ज्ञायन्ते, तान् दग्ध्वा "विजयतां श्रीरामचन्द्रः" इति क्रियासमभिहारेण विजयो जोघुष्यते। हसन्तो गायन्तो नृत्यन्तो नरास्ताभ्यां रामलक्ष्मणाभ्यां सह गृहं प्रत्यावर्तन्ते। एवमद्यत्वे प्रतिवर्षं प्रतिनगरमयमुत्सवः समारोहेण मान्यते पञ्चनदप्रान्ते ❀ लवपुरे अयं विजयदशम्या उत्सवो विशेषदर्शनीयो भवति।

जातेर्नितरामुपकारं जनयत्ययमुत्सवः। यथा शिक्षाप्रदश्चायम्, पूर्ववीरस्मृतिपूर्वकं वीररसस्य सञ्चारो भवत्यस्मिन्भारतीयानां चेतस्सु यथेयं भारतभूमी रत्नगर्भा, वसुन्धरा तथा वीरजनन्यपि-इति द्योत्यतेऽनेन। "आचारः प्रथमो धर्मः" विविधधनैश्वर्यबलसम्पन्नोऽपि दुराचारो निर्धनेनापि सदाचारिणा हन्यते, यथा रामेण रावणः। अतो रामवदाचरणीयं न तु रावणवत्। तथा च सीतायाः सतीत्वम्, भरतलक्ष्मणयोर्भ्रातृप्रेम, हनुमतो निष्कारणा

---

❀ लवपुरं साम्प्रतं पाकिस्ताने गतं यत्र यवनानामेव जातं प्राबल्यं, निष्क्रमणं च हिन्दूनाम्, साम्प्रतं तु तत्र स्वप्नायित एवायमुत्सवः।

प्रभुपदभक्तिः, इत्यादीन् विविधादर्शान् शिक्षयत्ययं विजयदशम्युत्सवः। तथा रामायणस्यानन्तादर्शपूर्ण इतिहास आबालवृद्धं विजातीयानामपि सुखेन हृदयङ्गमो भवति। एवमुत्सवविशेषोऽयं नानाशिक्षाप्रदो विविधलाभपूर्णो नितरामुपयोगीति।

परमद्यत्वे केषुचित् प्रान्तेषु पशुवधसुरापानादिकाः शास्त्रनिषिद्धाः कुप्रथाः प्रचलिता अस्यां विजयदशम्याम्। याभिरस्या वास्तविकं रूपं विकृतिं गतमिवास्ति। एतासां निरोधपूर्वकं यद्यस्योत्सवस्य समारोहः क्रियेत तदा-निश्चयेनोत्सवलक्ष्यं पूरयिष्यति। विजयदशमी चेयं पुनरपि दुष्टदलनं विधाय, विजयञ्चादाय भारतसमक्षमागमिष्यति। इति शम्।

---

## ( ६ ) दीपमाला।

### ( ले० श्री पं० प्रकाशचन्द्रशास्त्री विद्यालङ्कारः कविकान्तो हिन्दीप्रभाकरः )

[ मेलापरिचयात्मकोऽयं प्रस्तावः। दीपावली दीपमाला वा परमप्रसिद्धो भारतीयो महोत्सवः, सर्वमपीदमीयं वृत्तं रहस्यं वा प्रस्तावेऽस्मिन् प्रत्यक्षीक्रियताम्, शिक्ष्यतां च इदं-विधप्रस्ताव-लेखनप्रकारः ]

को हि भारतीयो न जानाति दीपमालामहोत्सवम् ?, भारतवर्षे यः प्रतिवर्षं कार्त्तिककृष्णामावस्यायां महता समारोहेण सहर्षं मान्यते। यत्र तत्र सर्वत्रैवाविरलानि दीपकानि प्रज्वाल्यन्ते, तदैवास्योत्सवस्य दीपामालेति नाम प्रख्यातिं गतमस्ति।

उत्सवो नूनं पूर्वघटितघटनया संबद्धो भवति। अयमपि तथा— श्रूयते रावणं निहत्य अस्मिन्नेव दिनेऽयोध्यामाजगाम भगवान् श्रीरामचन्द्रः। तदा रामदर्शनपिपासितैरयोध्यावासिभिः प्रमुदितैः परिमार्जिता रथ्या राजमार्गा गृहाश्च। स्थाने स्थाने प्रज्वालितानि दीपकानि। दत्तं विप्रेभ्यो बालेभ्यो याचकेभ्यश्च मिष्टान्नम्। तथा चानेनायमाशयोऽपि द्योत्यते—यत्

पाप-पाखण्डरूपं रावणं हत्वा रामरूपो धर्मः समागच्छति यदा; तदा मानुषाणां स्वान्तस्वरूपाणि दीपकानि प्रज्वलन्ति, तेषां प्रकाशे साधकाः स्वलक्ष्यमार्गं लभन्ते। इदमस्ति दीपमालाया आध्यात्मिकं रूपम्। तथा चास्मिन्नेव दिने वामनरूपमास्थाय भगवता विविध-विबुधैः सार्धं बलिना बन्दीकृता लक्ष्मी-र्मोचिता। अत एव लक्ष्मीपूजनं क्रियतेऽस्मिन् दिने, यत् ततो मुक्ता साऽस्माकं गृहे समागच्छेत् न गच्छेदन्यत्र।

अस्मिन्नेव दिने जैनमत–प्रवर्तकस्यान्तिम–तीर्थङ्करस्य भगवतो महा-वीरस्यापि निर्वाणं बभूव। तथाचायमेवार्यसमाज–प्रवर्तकस्य स्वामिनो दया-नन्दस्य महाप्रयाणदिवसः। यद्यपि नैतदस्माकमुत्सवोत्कर्षों यतो हि महा-पुरुषवियोगः खेदकरो भवति; परमेतयोरपि महापुरुषयोर्दीपमालया सम्बन्ध एतदर्थं कृतो निर्देशः।

किञ्च भारतं कृषि-प्रधानो देशः। वृष्टेरुत्पन्नोऽन्नराशिर्गृहे समागतस्तं दृष्ट्वा प्रफुल्लिता कृषि-गोरक्ष्य-वाणिज्य-कर्माणो वैश्या उत्सवं कुर्वन्ति, तथा च वर्षाकाले निरुद्धं वाणिज्यमस्माद् दिनादेव पुनरारभ्यते। तथा च यथा शरत्पूर्णिमा विशिष्टा भवति प्रकाशे सर्वासु निशासु, तथैव कार्त्तिककृष्णा-मावस्या विशिष्टा भवति तिमिरे। एतदपि दीपमालोत्सवस्य बीजम्, किमपि कारणं स्यादुत्सवोऽयं विशिष्टं महत्त्वं धारयति। विशेषतो वैश्यजात्या अस्य सम्बन्धः।

सम्बद्धघटनाभिस्तथा पुराणसनत्कुमारसंहितादि-ग्रन्थानामुल्लेखेन स्पष्टं प्रतीयते यदुत्सवोऽयं नितरां पुरातनः। तथा चैकादशशताब्द्यां समागतेन "अबूरेहन"–नाम्ना विदेशयात्रिणा दीपमालाया उल्लेखः कृतः।

लोका बहुदिनानि पूर्वमेवोत्सवे संलग्ना जायन्ते। धनत्रयोदशी, नरकचतुर्दशी, अप्यस्यैवोत्सवस्य द्वे अङ्गे, त्रिष्वेव दिनेषु कूप-तडाग-मार्ग-शालासु दीपप्रज्वालनं ग्रन्थेषु विहितम्। प्रथम-दिने त्रयोदश्यां नराः पात्राणि क्रीणन्ति। धनत्रयोदशी-शब्देन प्रतीयते यदस्मिन् दिने वैश्यानां सुवर्ण–रजतयोरादानप्रदानमभवत् पूर्वम्। अधुना पात्राणां व्यापारस्तस्यैव विकृतं स्वरूपम्। द्वितीयदिने नरकचतुर्दशी भवति, भगवता श्रीकृष्णेना-

स्मिन् दिने नरकासुरो व्यापादितः। अधुनाऽपि लोका मलरूपधरं नरकं गृहान्निस्सारयन्ति। तथा च रात्रौ यम-प्रीत्यर्थं दीपदानं कुर्वन्ति।

अमावस्या खल्वस्योत्सवस्य प्रधानो दिवसः। अस्य दिनस्य दर्शनीयं भवति दृश्यम्। सर्वे प्रमुदिता दृश्यन्ते। गृह-द्वार-रथ्या-शाला-मार्गाः संशोधिताः क्रियन्ते। नगरस्य कायकल्प इव सम्पन्नो भवति। न केवलं गृहानेव, नराः नार्यश्च स्वात्मानमपि भूषयन्ति विविधैर्वस्त्रालङ्कारभूषणैर्गन्ध-द्रव्यैश्च। अवर्णनीयो भवति बालकानामामोदप्रमोदः। प्रमुदितानि भवन्ति मोदकानि दृष्ट्वा तेषां स्वान्तानि। पण्यवीथयः समलङ्कृता भवन्ति नाना-पक्वान्नद्रव्यैः। किं बहुना समग्रं नगरमेव नृत्यतीवोत्सवस्योत्सवे। यदा तु सन्ध्या भवति तदा तु स्वर्गायते खलु मर्त्यलोकः, आमावास्यं निबिडं तमस्तिरस्क्रियते प्रतिस्थानमविरलं प्रज्वलिताभिर्दीपमालाभिः। "बलिबन्धान्-मुक्ता श्रीः समागच्छेदस्माकं गृहान्" एतदर्थं प्रतिगृहं लक्ष्मीपूजनं प्रार्थना च क्रियते। केषुचित् प्रान्तेषु गो-पूजनमपि विधीयते। परस्परं मिष्टान्नस्या-दानप्रदानं भवति। विप्रेभ्यो बालकेभ्यो याचकेभ्यश्च पक्वान्नं वण्ड्यते। स्तोत्रपाठो रात्रिजागरणञ्च क्रियते। व्यापारिणो नूतनाम् आयव्ययवाहि-कामस्मिन्नेव दिन आरभन्ते। मन्त्री-साधकानां तान्त्रिकाणामप्ययमेव प्रधानो दिवसः। तेऽपि मन्त्र–तन्त्र–साधनापरा अभिनवां सृष्टिं रचयन्तो दृश्यन्ते। इत्थं विविधप्रकारैरयमुत्सवो मान्यते, न केवलं हर्ष एव विशिष्टा उपकारा अपि सन्त्यस्योत्सवस्य। स्मारयति रामायणस्य विविधादर्शान्। अभिनवां करोति श्रीरामस्य स्मृतिम्। यथा लोकानां दुःखखेदरूपो मलोऽपनीतो हर्षेण दीपमालया, तथा वर्षपर्यन्तमेकत्रीभूतं गृहरथ्या–मार्गाणां कर्कटकूटमपि ( कूडा कर्कट ) दूरीकृतमनया दीपमालया। वर्षर्तावुद्भूता विविधरोगाणां कीटाणवो मशकादयश्च विनाशिता निजया स्वच्छतया। तथा च तैलदीप-गन्धेनाप्यायितः पवनः पावनो जातः। एवम् 'यत्र रामः समागच्छति तत्रा-ऽज्ञानजं तमो नश्यति प्रकाशो जायते तथा च स्वच्छतायां लक्ष्मीः प्रति-वसति। यत्र स्वच्छता तत्र श्रीरामस्य निवासस्तत्रैव लक्ष्मीनिवासः" इमं पाठं प्रतिवर्षं पाठयति दीपमाला। मिष्टान्नस्याऽऽदानप्रदानेनैकतायाः प्रचारो भवति, वर्धते पारस्परिकः स्नेहः, तथा व्यापारिणो गतवर्षस्यायव्ययविभागं

कृत्वा नूतनं वाणिज्यमारभन्ते। एवं सन्ति विविधा लाभा अस्या दीपमालायाः।

"द्यूतक्रीड़ा" नामास्ति महती कुप्रथाऽस्मिन्नुत्सवे। एतदतिनिन्द्यं कर्म। नास्ति कुत्रापि विधानमस्य। द्यूतक्रीडया महानपकारो भवति देशस्य, अस्मिन्नुत्सव एव बहवो मनुष्या द्यूतव्यसनिनो जायन्ते। सर्वस्वं द्यूते विनाशयन्ति। कलङ्कोऽमेतदुत्सवस्य। अतोऽस्य निराकरणं कृत्वा रामायण-कथाकीर्तनं कुर्वद्भिर्दीपमालायाः समारोहः कर्तव्यो येन यथार्थो लाभः सम्पद्येत।



## (७) मदीया काश्मीर-यात्रा

### (ले० प्रोपाध्यायः श्री पं० उमेशदत्त शास्त्री)

[ यात्राविषयकोऽयम् आदर्शप्रस्तावः। भूमिस्थ-स्वर्गस्य काश्मीरप्रदेशस्य वर्णनमिदं परमशोभनतया विहितं रमणीयभाषयोपनिबद्धं विदुषा लेखकेन ]

निर्वेलमानन्दथुमनुभवामि यदाऽहमतीतेऽब्दे निजैः प्रियवयस्यैः समं विहितां भूस्वर्गस्य काश्मीर-प्रदेशस्य यात्रामनुस्मरामि। तत्र यत् किञ्चन मयकाऽनुभूतं तद् विगलितवेद्यान्तरं पारे गिरां विद्यते, यद्यपि तदा मत्सविधे एका स्मृतिपुस्तिकाऽविद्यत, तथाऽपि तत्रत्य–दृश्यानां निकाम-रम्यतायाम् ईदृशो हर्षोन्मादो मे मानसे समुद्भूतः; येनाऽहं तेषां दृश्यानां क्रमिकं वर्णनमङ्कयितुं नापारयम्। "रसाल-फला-ऽऽस्वादनपरस्य तद्बीज-गणनया किं फल" मित्याभाणकमनुसृत्य तेषां लेखने उपेक्षामेवाऽकार्षम्। वस्तुतस्तु तत्रत्यमेकैकं दृश्यमेवंविधमासीत्, यस्य समास्वादने तदेकतानमानसः कोऽपि सुहृदयः तदीयं पौर्वापर्यं किंभूत-किमाकारतां च समुल्लेखितुं न क्षमते। तस्य तु मूकवत् स्थितिर्जायते, यो भक्ष्यमाणस्य फलस्य समास्वादं निगदितुं न पारयति, किन्तु मनसि निःसीममाह्लादं विन्दति। आसां पङ्क्तीनां लेखकस्यापि तदा तादृश्येव दशा समजनि। यत्किञ्चिदिदानीं स्मरामि तत्क्रम-

मुपेक्ष्यैव वाचकमहाभागानां हृदयानुरञ्जनाय अत्रोपनिबध्नामि। भौगोलिकं क्रमं कामयमाना रसिका अस्माद् वर्णनात् कामप्याशां नो धारयन्तु, किन्तु अनया मत्कृत्या तेषां मनाक् प्रसादो भविष्यत्येव ये यत् किञ्चित् सत्क्रमं व्युत्क्रमं वा भूस्वर्गविषये श्रोतुमुत्कर्णास्तिष्ठन्ति।

आसीत् स चरमः पक्षो ज्येष्ठमासस्य, यदाऽस्माकं, चेतःसु काश्मीर-यात्रासंकल्पः पदं न्यधत्त। चिरं निध्यातस्य मनोरथस्याऽस्य प्रस्तावकोऽस्माकं वयस्येष्वन्यतमः श्रीवारीशचन्द्र आसीत्। स हि कल्हणप्रणीतां राजतरङ्गिणीं नैकधा स्थानस्थानतो लयतालसमन्वितं चन्द्रालोकविद्योतितायां छात्रालयवाटिकायां गायं गायम् अस्माकं हृदयेषु काश्मीरपरिभ्रमणाऽभिलाषं संजनयति स्म, यथा गम्भीर-घनध्वनिः कर्णयोर्निपत्य बर्हिणश्चेतसि लास्य-लालसामुन्मेषयति, यथा वा पूर्णशशाङ्कस्य शारदी कौमुदी सागर-वीचि-मालामञ्जसैव नाटयितुमुपक्रमते। काश्मीरभुवं विलोक्य लोचने सार्थकयितुं मे मानसे महीयसी स्पृहाऽऽस्पदं कृतवती। यदीयं स्वर्गीयं चारुत्वमुपदिश्य कवि-कोकिलेन विल्हणेन स्वीये "विक्रमाङ्कदेवचरिता"ऽभिधाने काव्ये पद्यरत्नमिदं गीतम्—

"सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कविताविलासाः।
न शारदा-देशमपास्य दृष्टस्तेषां यदन्यत्र मया प्ररोहः॥"

सर्वे वयं चत्वारः सखायः अवकाशप्रयुक्तं सौविध्यमवधाय यात्रायै बद्धपरिकरा अभूम। धूमशकटि-विश्रान्तनिकेतनं गत्वा मध्यमकक्षायाः आष्टमासिकीं प्रत्यावृत्तिशुल्कचिटिकां परिक्रीय जम्बूनगरं प्रति प्रचलिताः, अध्वनि "अमृतसरः" प्राप्य स्वल्पो विश्रामो गृहीतः। "मोटर" यानेन शिष्याणां (सिक्खानां) धवलवापिकागर्भे समुत्फुल्ल-स्वर्ण-पुण्डरीक-गुच्छस्य नयनाऽभिरामस्य शिल्पकौशलस्याऽतिशयभूतस्य स्वर्ण-मन्दिरस्य दर्शनेन चक्षूँषि कार्तार्थ्यं नीत्वा मिष्टान्नसहकृतां विविध-फलराशिञ्च पाथेयकल्पं गृहीत्वाऽह्नायैव प्रतिनिवृत्ताः। चण्डांशोरंशवः तदानीं स्फुलिङ्गवृष्टिमिव विधातु-मुपक्रमन्ते स्म। प्रचण्ड-मार्तण्ड-मण्डलस्य तापप्राखर्य्येण धूमयानं भ्राष्ट्रमिव सन्तापितमभूत्। श्यालकोटाख्ये पत्तने भूयस्तोकं विरम्य अनुसायं 'जम्बु-नगरे विराजितायाः रुचिरायाः धर्मशालायाः अभ्रंलिहे कुट्टिमे आस्तरणानि

प्रासारयाम । तदैव वियति निजं विलक्षणं हाससौन्दर्यं प्रसारयतोऽमृतभानोर्निकामशीतला ज्योत्स्ना आमोदिना मन्देन गन्धवहेन सख्यं भजन्ती निदाघस्य रौद्रतां स्मृतिशेषतामनयत् । ग्रीष्मे एव शरदः शीतिमाऽन्वभूयत । सा रजनी मदीये मानसे स्थायुकं प्रभावं निक्षिप्तवती । नाकपृष्ठस्य सीमानमेवावसाद्य यथा कश्चन स्वर्गस्य कमनीयत्वं विदितप्रायं मनुते सैव दशास्माकं "जम्बू"-नगरं साक्षात्कृत्य अभवत् । वस्तुतस्तु काश्मीरतुलायां वराकस्य जम्बूनगरस्य कियती मात्रेति नो विदितमेव नासीत् । इतरस्मिन्नहनि प्रतिजनमष्टरूप्यकमितेन भाटकेन वयं काश्मीरभुवं प्रातिष्ठामहि । यदैव गव्यूतिसप्तकमत्यक्रास्याम तदैव स्फटिकावदातानां मौक्तिकचूर्णाभानां निर्झराणां श्रोत्ररसायनायिता झङ्काराः कर्णेषु पतितुमारेभिरे । उभयोः पार्श्वयोर्भूरुह-श्रेणी-वलयिता समुत्तुङ्गा गिरिमाला, अधस्ताच्च कलराविणी तरङ्गिणी, तस्याश्चोपरिष्टात् सञ्चारिणी वलाहकततिर्लोचनानां पारणामिवाऽतनिष्ट । यथा यथा वयमग्रतः प्रस्थिताः तथा तथा गिरिप्रस्रवणानां सङ्ख्या विस्तरश्च वृद्धिमभजत् । जम्बूनगरात् श्रीनगरप्रापकस्याध्वनो दैर्घ्यं सार्धशतक्रोशेभ्योऽप्यधिकं विद्यते, पथिकजनानां विश्रान्त्यै मध्ये मध्ये नैकानि विश्रान्तिनिकेतनानि निर्मापितानि सन्ति । येषु स्वल्पमेव शुल्कं दत्त्वा पथिका अशनं वासञ्च कर्त्तुं क्षमन्ते । वयं तैर्बहूपकृताः । रामवनं तेषामन्यतममस्ति । यत्र प्रकृतिदेवी स्मेराऽऽननाम्बुजेव प्रतीयते ।

तत्र गिरिक्रोडे प्रवहन्त्याः कल्लोलिन्या मत्तमन्थरगतिः शुक्तिचूर्णधवला कान्तिर्नूनमेव मनांसि चोरयतीव प्रेक्षकाणाम् । तत्र विविधान् सौरभोद्गारिणो वनस्पतीन् सरितः सीकरांश्चालिङ्ग्य समागच्छन् नभस्वान् निटिलस्तवकितान् पर्वताऽधिरोहणश्रमिणां प्रस्वेदकणान् प्रागेव संमार्ष्टि । ततोऽग्रेऽदभ्रैरभ्रैः समाकीर्णा हिमोपवीतिन्यो हैमवत्यः श्रेणयो लोचनप्राघुणिकतामायन्ति । तासामुपरि भुजङ्गमकुटिलया गत्या संसर्पन्ती मोटरलारीपङ्क्तीः पार्वत्यानामध्वनां वक्रिमाणं सम्यग् व्यक्तीकरोति । अनन्तरमेव दुरारोहं पीरपंजालाऽभिधं पर्वतशृङ्गं चक्षुर्गोचरतामायाति । यत्र पदव्या महत्यावक्रतया दृढहृदयानामपि लारीचारिणां वमथुः प्रवर्तते । तत्र ममापि शिरो मनाग्घूर्णितमिवाऽभूत् । तदा मयाऽपि क्रोशयुगं पद्भ्यामेवावरोहः कृतः ।

ऽद्रिपरम्परा। लोकलोचनेषु पीयूषधारां निषिञ्चन्निव सवेगं समुच्छलतां निर्झराणां झङ्कारो हृदयानि प्रमोदभर-पुलकितानि विधत्तेतराम्। अनयोरेव मञ्जुलतमयोः स्थानयोर्योरोपीया यात्रिणो विलास-लालसोन्मत्ता भारतीया नरपतयश्च स्वर्ग-सौख्यमनुभवन्ति। अत्र वेरीनाग—संज्ञकमगाधं रुचिरं सरोऽपि विलोकनीयमस्ति। अनन्तनाग—मटन-संज्ञकयोरपि स्थलयोः रामणीयके द्रष्टव्यतामर्हतः, मटनस्थं मार्त्तण्ड-मन्दिरं पुरातत्त्वज्ञेभ्यः तीर्थाटन-परायणेभ्यो धार्मिकेभ्यश्च महत्त्वसम्पन्नमस्ति। कुंकुमकेदारेषु विकसन्ती सौरभसारमुद्वहन्ती निजेन पीतिम्ना दिशां-मुखानि पिञ्जरयन्ती प्रतप्तहाटकच्छविं भुवि प्रसारयन्ती घुसृणपंक्तिः पथिकानां चेतांसि बलात् समाकर्षति। तिरस्कृत-स्वर्गाप्सरोविभ्रमा नारङ्क—प्रस्पर्धिकपोलाः कुन्दकुड्मलाग्रदशनाः काश्मीरिक्यो वामलोचनाः निजैश्चन्द्रिकाधवलैः मधुरैः स्मितैः समुद्भासितमिवाह्लादाम्भोनिधौ निमग्नमिव विदधति निखिलमपि काश्मीरमण्डलम्। आयताकारा स्वच्छवारिपूर-समुत्तरङ्गाऽगाधाऽबूलरकुल्यापि प्रशस्ते निजवक्षसि खेलन्तीभिस्तरीभिः यात्रिणां स्वागतार्थं सज्जेव प्रतिभाति। चन्द्रालोकेऽस्यां विहारो महीयसीं मुदं ददाति। विविधैः फलभारैर्विनम्राः पादपा अधीरकृतसुधासारस्यानि हृद्यतमानि फलानि प्रसुवते। कल्हारवनीषु कलिकाभिः केलिं विदधानां मधुव्रतमण्डली निजमञ्जुगुञ्जितेन जलविहारिणां मनांसि सुतरां हरति। प्रदेशस्यास्य शोभाऽमरनाथयात्राकाले सामस्त्येन विलोचनगोचरतामागच्छति यदा यात्रिणः पद्भिरेव हिमानी-वेष्टितामद्रिश्रेणीमारुह्य प्रकृत्या हृदयं प्रविश्य तदीयं सारस्यमनुभवन्ति।

(निबन्धरचना-प्रकाशतः)



# अथ चरितात्मकाः प्रस्तावाः

## ( ८ ) लीलापुरुषोत्तमो भगवान् श्रीकृष्णचन्द्रः ।

[ श्रीलीलापुरुषोत्तमस्य भगवतः श्रीकृष्णचन्द्रस्य सकल-पापहरं पवित्रतमं चरित्रमिदं पौराणिकभाषया अनुष्टुप्-छन्दोभिः पौराणिक्यैव परिपाट्या सङ्क्षिप्यैकपञ्चाशदधिक-शतसङ्ख्याकैरेव पद्यैरुपवर्णितम् । प्रसङ्गतो भारतीय-लीलासु अर्जुनाय श्रीगीतोपदेशस्य कर्मयोग-सारमयो भागः श्रीगीतावाक्यैरेव समृद्धृतः। पठन्तश्चेदं पाठकाः पौराणिकीमेव भावनां लीलामाधुर्यं च भगवतोऽनु-भविष्यन्ति । सर्वक्षेत्रेषु द्वापरयुगीनस्यास्याद्भुत-क्रान्ति-कारिणो नेतुः परमसङ्घर्षमयं जीवनं निध्याय चकित-चकिताश्च भविष्यन्ति । ]

समये समये लोके भगवान् हरिरीश्वरः ।
अवतीर्य सदा साधून् त्रायते महतो भयात् ॥ १ ॥
यदा यदा हि धर्मस्य ग्लानिर्भवति भूतले ।
अभ्युत्थानमधर्मस्य तदाऽत्मानं सृजत्यसौ ॥ २ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवत्यात्ममायया ॥ ३ ॥
अवतारा हरेरत्र बभूवुर्बहवः खलु ।
सर्वे चांशकलाः प्रोक्ताः कृष्णस्तु भगवान् स्वयम् ॥ ४ ॥
पूर्णावतारो रामोऽभूत् मर्यादापुरुषोत्तमः ।
परिपूर्णतमः कृष्णः श्रीलीलापुरुषोत्तमः ॥ ५ ॥
द्वापरान्ते कलेरादौ युगसन्धौ महाभये ।
राजन्यवर्गे कंसादौ राक्षसं भावमाश्रिते ॥ ६ ॥
धर्मेषु विहतेष्वत्र पाखण्डेषूद्गतेषु च ।
साधुषु पीड्यमानेषु पूज्यपूजाव्यतिक्रमे ॥ ७ ॥

व्रजभूमौ शौरसेने देशे परमपावने ।
मथुरायां महापुर्यां देवकी-वसुदेवयोः ॥ ८ ॥
कारायां कंसनृपते रुद्धयोर्यदुवर्ययोः ।
भाद्रे मासि कृष्णपक्षे रोहिण्यां बुधवासरे ॥ ९ ॥
अष्टम्यामर्ध-रात्रे च प्रादुर्भूतो महाप्रभुः ।
भगवान् कृष्णचन्द्रोऽयं श्रीलीलापुरुषोत्तमः ॥ १० ॥
दिशः प्रसेदुर्गगनं निर्मलोडुगणोदयम् ।
ववुर्वाताः सुखस्पर्शाः प्रसन्नाश्च जलाशयाः ॥ ११ ॥
आनन्दः साधुमनसि समजायत सर्वतः ।
सर्वाऽपि प्रकृतिः पूर्णा प्रसन्ना समपद्यत ॥ १२ ॥
भीतौ स्वौ पितरौ वीक्ष्य भगवान् मधुसूदनः ।
मेघगम्भीरया वाचा माधुर्य-परिपूर्णया ॥ १३ ॥
प्रोवाच मा भयं वो भूत् कंसादीन् दुष्टराक्षसान् ।
हनिष्यामि, करिष्यामि सुखिनः सर्व-सज्जनान् ॥ १४ ॥
तात ! मां गोकुले शीघ्रं नय त्वं नन्दवेश्मनि ।
उत्पन्नामधुनैवात्र योगमायां समानय ॥ १५ ॥
आदिश्य भगवानेवमभवत्प्राकृतः शिशुः ।
वसुदेवस्तमादाय मुक्त-सर्वात्म-बन्धनः ॥ १६ ॥
प्रापयामास निर्विघ्नं गोकुले नन्दमन्दिरे ।
समादाय सुतां तस्य कारायां पुनरागतः ॥ १७ ॥
ज्ञातजन्माथ कंसोऽसौ व्योम-भाषा-विमोहितः ।
सुतामादाय देवक्या रुदत्यास्तु स्वसुर्बलात् ॥ १८ ॥
निजघान नृशंसोऽयं सा गता दिव्यदृश्यत ।
देवी भूता कंसमाह "क्वचिज्जातस्तवान्तकृत्" ॥ १९ ॥
ततो यशोदा बुबुधे जातमानन्ददं सुतम् ।
नन्दपुत्र-समाचारः पप्रथे गोकुले तदा ॥ २० ॥
जगुर्गोप्यो भृशं प्रीता वस्त्राभरण-भूषिताः ।
नन्दस्य गृहमागत्य यशोदां वर्धयन्ति च ॥ २१ ॥

दिष्ट्या त्वं वर्धसे देवि ! दिष्ट्या जातस्तवात्मजः ।
दिष्ट्या नन्दस्य वंशोऽयं जातः सर्वसमुन्नतः ॥ २२ ॥
पुत्र-जन्मोत्सवानन्द-प्रफुल्ल-हृदयस्तदा ।
नन्दोऽदात्कोटिशो धेनूर्विप्रेभ्यः साध्वलङ्कृताः ॥ २३ ॥
पुत्रजन्मोत्सवे तस्मिन् नन्दो गोप-गवां पतिः ।
अन्येभ्योऽपि यथाकामं प्रददौ सर्वसम्पदः ॥ २४ ॥
श्रुत्वा कन्या-वचो व्यग्रः कंसो राजा व्यचिन्तयत् ।
देवक्या अष्टमो गर्भो न स्त्री भवितुमर्हति ॥ २५ ॥
दुर्मन्त्रिभिर्मन्त्रयित्वा राक्षसान् बाल-घातने ।
न्ययोजयदात्म-शत्रोः कृष्णस्य वधकाङ्क्षया ॥ २६ ॥
पूतना प्रेषिता तेन राक्षसी बाल-घातिनी ।
कृष्णेन शिशुना तस्याः पीतं स्तन्यं सहासुभिः ॥ २७ ॥
व्योमोऽपि निहतस्तेन वात्या-रूपधरोऽसुरः ।
पातितः शकटश्चापि दैत्यः शकटमाश्रितः ॥ २८ ॥
विविधा बालक-क्रीडाः सर्वसत्वमनोहराः ।
कुर्वन् स ववृधे कृष्णः शुक्लपक्ष इवोडुपः ॥ २९ ॥
हैयङ्गवीन-स्तैन्ये प्राङ् मात्रा बद्ध उलूखले ।
उलूखलं विकर्षन् स यमलार्जुनमध्यतः ॥ ३० ॥
निष्क्रामन् कृतवान् सद्य उद्धारं यक्षपुत्रयोः ।
विनिष्क्रामन्नुदद्धार कुबेरस्यात्मजावुभौ ॥ ३१ ॥
नलकूबर-मणिग्रीवौ शापाद् वृक्षत्वमागतौ ।
प्रत्यहं यमुनाकूले वत्सान् धेनूश्चारयत् ॥ ३२ ॥
वने तत्र मुदा युक्तः श्रीहरिर्बालरूप-धृक् ।
अकरोद् विविधाः क्रीडा बाह्य-वाहादि-लक्षणाः ॥ ३३ ॥
श्रीनन्दनन्दनं वीक्ष्य वंशीवादनतत्परम् ।
मनांस्यासन् प्रसन्नानि गोपी-गोप-गवां तदा ॥ ३४ ॥
बकासुरोऽघासुरश्च हतौ राक्षस-पुङ्गवौ ।
वत्सासुरो धेनुकश्च हतो वा घातितोऽथवा ॥ ३५ ॥

क्रीडाकन्दुक-व्याजेन कालियो निरवास्यत ।
निर्भया च कृता तेन कालिन्दी निर्विषोदका ।। ३६ ।।
कार्य-व्यग्रासु गोपीषु क्रीडा मनुज-बालकः ।
चोरयित्वापि निभृतं सस्वदे नवनीतकम् ।। ३७ ।।
गोपीनां तु मनस्तत्र कृष्णे मदन-मोहने ।
प्रेमासक्तमभूद् येन तन्निष्ठ-हृदयाशयाः ।। ३८ ।।
गोप्यः सदा तदासक्तास्तद्दर्शन-मोहत्सुकाः ।
निन्युर्दिनानि दुःखेन गोचारणगते हरौ ।। ३९ ।।
स साक्षी सर्वभूतानां सर्व-कामवर-प्रदः ।
विबुध्य मनसो भावं तासां रासं चकार ह ।। ४० ।।
वंशीनादैः समाहूय ब्रह्मरात्रे महाप्रभुः ।
अखण्ड-सच्चिदानन्द "आत्मारामोऽप्यरीरमत्" ।। ४१ ।।
गोपा गोप्यश्च गावोऽपि वत्सा वत्सतरास्तथा ।
श्रीकृष्णे सच्चिदानन्दे वत्सलाः सर्वदाऽभवन् ।। ४२ ।।
कंसेन प्रहिता घोराः केश्यरिष्टादयोऽसुराः ।
निहताः कृष्णचन्द्रेण कंस-षड्यन्त्र-कारिणः ।। ४३ ।।
अन्तिमः षड्यन्त्रोऽयं भोजराजेन चिन्तितः ।
आहूय मल्लयुद्धेन घातये मधुसूदनम् ।। ४४ ।।
अक्रूरः प्रेषितस्तेन मथुरां प्रति नीतवान् ।
कृष्णं सरामगोपालं सह नन्दादिभिर्हरिम ।। ४५ ।।
गोप्यस्तद्-विरह-व्यग्रा नेत्राभ्यां मुमुचुः शुचः ।
विवशा वारणे तास्तु निवृत्ताः स्वगृहान् प्रति ।। ४६ ।।
कृष्णः कुवलयापीडं रङ्ग-द्वारि स्थितं गजम् ।
निहत्य सह रामेण प्रविवेश सुहृद्वृतः ।। ४७ ।।
चाणूरो मुष्टिकश्चापि शलस्तोशलकस्तथा ।
मल्लाधिपतयो युद्धे निहता नन्द-सूनुना ।। ४८ ।।
शेषा प्रदुद्रुवुर्मल्ला भयभीता यथादिशम् ।
गोपालाः कृष्णपक्षीया जयघोषं वितेनिरे ।। ४९ ।।

अन्तिमे षड्यन्त्रेऽपि व्यर्थीभूते व्यघोषयत् ।
कंसो दुष्टमतिर्मन्दो "निस्सारयत गोपकान् ॥ ५० ॥
कृष्णं बध्नीत रामं च नन्दं तत्पितरं तथा" ।
एवं प्रलापिनं कंसं तरसाऽऽप्लुत्य मञ्चके ॥ ५१ ॥
कृष्णो जग्राह केशेषु पातयामास भूपरि ।
भूपृष्ठे पोथयामास भूभारं संजहार च ॥ ५२ ॥
उद्धार स तान सर्वान् यादवान दुःख-कर्षितान् ।
ये पुरा कंस-संविग्ना विदेशेषु पलायिताः ॥ ५३ ॥
कारातः पितरौ देवो मोचयामास यत्नवान् ।
सान्दीपनेर्गुरोः सर्वा विद्याः समधिजग्मिवान् ॥ ५४ ॥
जरासन्ध-विरोधस्य मिषेण भगवान् हरिः ।
भूभारं क्षपयामास दुष्ट-क्षत्रियजं पुनः ॥ ५५ ॥
अष्टादशतमे युद्धे कालाख्यं यवनेश्वरम् ।
युक्त्याथ घातयामास मुचुकुन्ददृशैव तु ॥ ५६ ॥
जरासन्धस्य पुरतः हरिश्चक्रे पलायनम् ।
नाऽयं वध्यो मया शत्रुरिति संचिन्त्य मानसे ॥ ५७ ॥
आश्चर्य्यो दधौ दुर्गं द्वारकां-दिव्य-दर्शनाम् ।
पुरीमावास्य तत्रैव यादवान् समनाययत् ॥ ५८ ॥
यादवानां कृतो राजा कंसस्य जनकस्तु सः ।
उग्रसेनो महाबुद्धिः स्वयं तत्सेवकोऽभवत् ॥ ५९ ॥
आयुषः प्रथमं भागं व्यतिगम्यैवमात्मनः ।
अपरं भागमाविष्टः परमं महिमान्वितम् ॥ ६० ॥
रुक्मिणीं भीष्मकसुतामुपयेमे महाप्रभुः ।
राक्षसेन विधानेन श्रीलीला-पुरुषोत्तमः ॥ ६१ ॥
सप्तान्याः सत्यभामाद्याः सुन्दरीः परिणीतवान् ।
अष्टावेता हि कृष्णस्य महिष्यो मुख्यतां गताः ॥ ६२ ॥
भौमासुरमथाहत्य राजकन्याः विमोच्य सः ।
सर्वाः षोडशसाहस्रमुपयेमे शताधिकम् ॥ ६३ ॥

एवं महागृहस्थोऽयं पुत्रपौत्रादिमान् प्रभुः ।
द्वारकामावसन् कृष्णो यदुराजो व्यराजत ॥ ६४ ॥
राज्ञो युधिष्ठिरस्याथ राजसूयमहोत्सवे ।
साहाय्यं कृतवान् पूर्णं पार्थसख्य-मनुव्रतः ॥ ६५ ॥
ब्राह्मणं वेशमास्थाय मल्लयुद्धेऽरिसूदनः ।
भीमेन बलिना तत्र जरासन्धमजीघतत् ॥ ६६ ॥
अमूमुचद्राजसङ्घं सहदेवेन सादरम् ।
बन्दीकृतं तु कारायां मागधेन बलीयसा ॥ ६७ ॥
यज्ञे यौधिष्ठिरे तस्मिन् मुख्यमासनमास्थितः ।
लेभेऽग्रपूजां सर्वेषु राजन्येषु महर्षिषु ॥ ६८ ॥
यज्ञेऽत्र सेवाकार्येषु व्यापृतोऽयं महात्मनाम् ।
विनीतं भावमापन्नोऽकार्षीत्पादावनेजनम् ॥ ६९ ॥
नामृष्यच्छिशुपालोऽस्य तत्पूजामनुसूयकः ।
अवाच्यं भाषमाणोऽसौ चक्रेण विनिपातितः ॥ ७० ॥
कृष्णोऽयं भारते नेता निर्भीकः सत्य-पक्षगः ।
राजनीतौ राष्ट्रनीतौ क्रान्तिकारी महानभूत् ॥ ७१ ॥
धर्मस्य राष्ट्रवर्गस्य रक्षिता पालकस्तथा ।
अध्यात्मविद्या-मर्मज्ञो भगवान् भक्तवत्सलः ॥ ७२ ॥
धर्म–पक्षाश्रिता आसन् पाण्डवा भगवत्प्रियाः ।
अधर्मं पक्षमाश्रित्य कौरवास्तानपीडयन् ॥ ७३ ॥
दुर्योधनादिभिर्दुष्टैः पीडिता दुःखिता भृशम् ।
द्यूते पराजिताः कूटैर्वनवासं च लम्भिताः ॥ ७४ ॥
तेषां विपत्तावेतस्यां हरिरेव सहायकः ।
बभूव नान्यः सम्बन्धी "क्लेशे कस्यास्ति सौहृदम्" ॥ ७५ ॥
अज्ञातवास-कालं च व्यतिगम्य समागताः ।
भागं स्वं प्राप्तुमाहुस्ते नाऽदाद्दुर्योधनो यदा ॥ ७६ ॥
सन्धिदूतस्तदा भूत्वा कौरवानगमद्धरिः ।
प्रोवाच न्याय्य-वचनं विग्रहं शमयन्नसौ ॥ ७७ ॥

युष्माकं भ्रातर इमे पाण्डवास्तुल्य भागिनः ।
अल्पीयसापि भागेन तोषणीया इमेऽपि वः ॥ ७८ ॥
सर्वं तिष्ठतु युष्माकं दीयतां ग्राम-पञ्चकम् ।
एतावतैव सन्तुष्टाः स्थास्यन्ति खलु पाण्डवाः ॥ ७९ ॥
श्रुत्वापि वचनं न्याय्यं भवितव्य-विमोहितः ।
दुर्योधनो व्याजहार सर्वनीतिविदं हरिम् ॥ ८० ॥
नास्ति भागस्तु राज्येऽस्मिन् पाडवानां मनागपि ।
किं ग्रामपञ्चकं ब्रूषे दातुं तेषां सहायकृत् ॥ ८१ ॥
व्यर्थः श्रमोऽयं भवतः सन्ध्यर्थः परिगण्यताम् ।
"सूच्यग्रं नैव दास्यामि विना युद्धेन केशव !" ॥ ८२ ॥
सर्वोपायेषु शान्तेस्तु व्यर्थीभूतेषु भारते ।
महाभारतयुद्धस्य दध्वने रणदुन्दुभिः ॥ ८३ ॥
स्वकीयं यादवं सैन्यं कौरवेभ्यो ददौ हरिः ।
स्वयं च पाण्डुपुत्राणां धर्म्यं पक्षमुपाश्रितः ॥ ८४ ॥
"नाऽहं शस्त्रं ग्रहीष्यामि" प्रतिज्ञाय तदा हरिः ।
तोत्र-वेत्रधरो हस्ते भगवान् भक्त-वत्सलः ॥ ८५ ॥
रश्मीन् जग्राह वाहानामर्जुनस्यास सारथिः ।
यद्दृष्ट्वा सञ्जयः प्राह गीतान्ते सारमादिशन् ॥ ८६ ॥
"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम" ॥ ८७ ॥
अथैवं ते कुरुक्षेत्रे समवेता युयुत्सवः ।
कौरवाः पाण्डवाः सर्वे परस्पर-जिगीषया ॥ ८८ ॥
तत्र मध्यगतः पार्थः सर्वतो वीक्ष्य बान्धवान् ।
"कृपया परयाविष्ट उवाच मधुसूदनम्" ॥ ८९ ॥
"एतान्न हन्तुमिच्छमि घ्नतोऽपि मधुसूदन !
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते" ॥ ९० ॥
"निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन !
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः" ॥ ९१ ॥

"स्वजनं हि कथं हत्वा सुखिनः स्याम माधव !
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्" ॥ ९२ ॥
"न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च" ॥ ९३ ॥
"एवमुक्त्वा हृषीकेशं गुडाकेशः परंतपः,
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह" ॥ ९४ ॥
एवं मोहाकुलं पार्थं धर्मयुद्ध-पराङ्मुखम् ।
दृष्ट्वा गम्भीरया दृष्ट्या प्रहसन् प्राह माधवः ॥ ९५ ॥
"कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन !" ॥ ९६ ॥
"क्लैब्यं मास्म गमः पार्थ ! नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परं तप !" ॥ ९७ ॥
"अशोच्यानन्वशोचस्त्वं प्रज्ञा-वादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" ॥ ९८ ॥
आत्मा नित्यो निर्विकारः सदानन्दमयो विभुः ।
म्रियते मार्यते नापि नाभूत्वा भाववानयम् ॥ ९९ ॥
"य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते" ॥ १०० ॥
"वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ ! कं घातयति हन्ति कम्" ॥ १०१ ॥
यथा जीर्णानि वस्त्राणि त्यक्त्वा गृह्णाति मानवः ।
नवीनानि तथैवात्मा शरीराणि पुनः पुनः ॥ १०२ ॥
"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः" ॥ १०३ ॥
"अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि" ॥ १०४ ॥
"जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि" ॥ १०५ ॥

"स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते" ॥ १०६ ॥
"अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि" ॥ १०७ ॥
"अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते" ॥ १०८ ॥
"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः" ॥ १०९ ॥
"सुख–दुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि" ॥ ११० ॥
"कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि" ॥ १११ ॥
"योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ! ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ११२ ॥
"तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः" ॥ ११३ ॥
"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि" ॥ ११४ ॥
"यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानु वर्तन्ते मनुष्याः पार्थ सर्वशः" ॥ ११५ ॥
"उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम् ।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः" ॥ ११६ ॥
"मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः" ॥ ११७ ॥
"श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ११८ ॥
'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" ॥ ११९ ॥

"नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" ॥ १२० ॥
"यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ १२१ ॥
"सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्" ॥ १२२ ॥
"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः" ॥ १२३ ॥
"कच्चिदेतच्छ्रुतं पार्थ ! त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय !" ॥ १२४॥
इत्येतत्सकलं श्रुत्वा गीताज्ञानं तु पाण्डवः ।
नष्टमोहः सुखी भूत्वा गद्गदाक्षरमब्रवीत् ॥१२५॥
"नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत !
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव" ॥१२६॥
सेयं सप्तशती गीता श्रीकृष्णेन समीरिता ।
अर्जुनाय प्रपन्नाय यया मोहो लयं गतः ॥१२७॥
अत्र योगास्त्रयः प्रोक्ताः श्रीकृष्णेन महात्मना ।
कर्मयोगो ज्ञानयोगो भक्तियोगश्च मध्यमः ॥ १२८ ॥
सारोऽयं कर्मयोगस्य सङ्क्षेपेण समुद्धृतः ।
गीताया एव तैर्वाक्यैर्वासुदेवमुखोद्गतैः ॥ १२९ ॥
गीताज्ञानमिदं पुण्यं सर्व-शास्त्रार्थ-सम्मतम् ।
कृष्णेन कीर्तितं दिव्यं सार्वभौम-हितात्मकम् ॥ १३० ॥
का समस्या समस्तेऽपि संसारे जटिलाऽस्ति या ।
समाहिता न गीतायां कृष्णेन परमात्मना ॥ १३१ ॥
श्रीकृष्णकृपया लब्धो विजयः पाण्डवै रणे ।
निर्बलैर्निस्सहायैश्च विहीनैः साधनैरपि ॥ १३२ ॥
निस्सहाय-सहायोऽसौ निष्किञ्चन-जनप्रियः ।
निर्बलानां बलं कृष्णः पतितानां च पावनः ॥ १३३ ॥

निर्बला निस्सहायाश्च रक्षिता पालितास्तथा ।
ऐश्वर्य-मदमत्तास्तु चूर्णिता दण्डिता भृशम् ।। १३४ ।।
"द्रौपदी च परित्राता तेन कौरवकश्मलात्" ।
दीनः सुदामा भक्तोऽसौ सर्व-सम्पत्तिभाक् कृतः ।।१३५।।
समग्रं जीवनं ह्यस्य श्रीकृष्णस्य महात्मनः ।
परार्थमेव घटितं न स्वार्थं किमपीहितम् ।। १३६ ।।
स्वकीया परकीया वा अत्याचार-परायणाः ।
दीनानां पीडका येऽपि निहताः सर्व एव ते ।। १३७ ।।
ऐश्वर्य-मदमत्ता ये धर्म-ब्राह्मण-द्रोहिणः ।
दण्डिताः सर्वकल्याणं साधितं परमात्मना ।। १३८ ।।
कंसो वा शिशुपालो वा दन्तवक्त्रादयस्तथा ।
स्वकीया एव ते सर्वे दीन-धर्म-द्रुहो हताः ।। १३९ ।।
स्वकीयैर्यादवैर्दृप्तैर्मद-मान-बलान्वितैः ।
संशोधयाम्बभूवाऽसौ दुष्टराजन्यकं क्रमात् ।। १४० ।।
मर्यादोल्लङ्घिनो वीक्ष्य स्वकीयानपि यादवान् ।
पारस्परिकयुद्धेन प्रभासे समनीनशत् ।। १४१ ।।
अयं स्वः परकीयो वा भावो नासीन्महात्मनः ।
"कण्टकं कण्टकेनैव द्वयं चापीशितुः समम्" ।। १४२ ।।
चरितं कृष्णचन्द्रस्य सर्वतो भद्रमस्ति नः ।
चित्रं नु कर्मयोगस्य दर्पणे प्रतिबिम्बितम् ।। १४३ ।।
जन्मतस्तु समारब्धा लीलास्ताः परमाद्भुताः ।
राजनीति-रहस्येन पूर्णाः पूर्ण-तमास्तु याः ।। १४४ ।।
जन्म दिव्यं कर्म दिव्यं दिव्यं माधुर्यमस्य तु ।
ज्ञानं गीतामयं दिव्यं दिव्यं लीला-कदम्बकम् ।। १४५ ।।
गोपीप्रेम परं दिव्यं दिव्यं दर्शनमस्य च ।
किं किं न दिव्यं कृष्णस्य चरितं परमात्मनः ।। १४६ ।।
शिक्षितं बालकेनैव गोरक्षणमनेन तु ।
स्वतन्त्रजीवनं चापि शिक्षितं सुखदं शिवम् ।। १४७ ।।

बालळीला रासलीला युद्धलीला महाद्भुताः ।
सर्वं लीलामयं दिव्यं कृष्णस्य चरितं शुभम् ॥ १४८ ॥
सङ्घर्षमयमेतस्य जीवनं परमाद्भुतम् ।
दिव्यलीलमयं विष्णोः परमानन्ददायकम् ॥ १४९ ॥
पुण्यं यशस्यं पापघ्नं दुःखशोक-विनाशकम् ।
इदं चरित्रं पठतां भूयान्मङ्गलमुत्तमम् ॥ १५० ॥
सर्वेषां सर्वसुखदः सच्चिदानन्दविग्रहः ।
कल्याणं साधयेत्कृष्णः श्रीलीला-पुरुषोत्तमः ॥ १५१ ॥

---

## (६) लोकमान्यस्तिलकः ।

(ले० प्राध्यापकः श्री पं० रामनाथशास्त्री विद्यालङ्कारो हिन्दीप्रभाकरः)

[ लोक-मान्यो भगवान् तिलकः । "स्वराज्यमस्माकं जन्मसिद्धोऽधिकारः" इति तस्य भारत-स्वातन्त्र्य-सिद्धये सिद्धमन्त्रः । विश्वविदितोऽयं क्रान्तिकारी नेता, निर्भीकः, धर्मात्मा, सदाचारपरायणः, भारतीयसंस्कृतिसर्वस्वभूतः, सर्वमिदमीयादर्श-जीवनं प्रस्तावे दृश्यताम् । रमणीयेयं लेखस्य शैली ]

संस्कृतिं निरीक्ष्य कस्यचिदपि देशस्योन्नतेरनुमानं कर्तुं शक्यते। समुन्नतसंस्कृतिमन्तो देशाः कालवशात् पतनमापन्ना अपि पुनरुत्थानाय कल्पन्ते। परं संजीवनी-शक्तिसम्पन्ना सैव संस्कृतिर्मन्यते—भवेयुर्यस्यां विश्वस्यापि विश्वस्याभ्युदय-निश्रेयसयोरङ्कुराः । अन्यथा संस्कृत्या सह तदनुप्राणित-राष्ट्रस्य पतनमपि ध्रुवमेव ज्ञेयम् । विश्वभद्रोत्पादिनी सा नोत्पद्यते स्वल्प-समये । असङ्ख्यवर्षेषु तन्निर्माणं जायते । वस्तुतस्तु देशविभूतिस्वरूपाणां महानुभावानामैतिह्यमेव सा भवति । प्रतिसमयमाध्यात्मिक-सामाजिक-राजनीतिक-धार्मिकार्थिकादिक्षेत्रेषु समनुष्ठितैस्तेषां कार्यजातैः सततं परिपूर्यते संस्कृतिकोषः । विविध-धाराभिः संवृद्धः संस्कृति-सरित्प्रवाहः प्रवहन् चिराय दृढीभूय मार्गावरोधि-विविध-बाधाभिरनवरुद्धः सत्यामपि प्रतिकूल-

दलितायां जनतायां साहस-सञ्चाराय गणपति-शिववीरोत्सवौ सम्प्रचारितौ। तदानीं राष्ट्रियमहासभायाः ( कांग्रेसस्य ) नामापि न श्रूयते स्म। अतो भारतीय स्वातन्त्र्यान्दोलनस्य जनकोऽप्ययमेव मन्तव्यः।

१८५७ खीष्टाब्दे सम्पन्नविद्रोहानन्तरं विदेशीयसत्ताया भारतीयेषु विश्वासनाशेन राज्यकार्येषु नासीद् भारतीयानां स्वल्पीयानपि अधिकारः क्षुद्र-राजभृत्यत्वोपलब्धिरपि दुष्करा समभूत्। प्रतीयते यद्यप्यद्य हास्यास्पदमेवत्, परं तदानीं तत्प्राप्त्यर्थमितरकष्टापनोदनार्थञ्च शिक्षितवर्गेण १८८५ खीष्टाब्दे राष्ट्रियमहासभायाः संघटनमनुष्ठितं यत्प्रसार उच्चवर्गेष्वासीत्। ते प्रतिवर्षमेकत्रीभूयैकवारं दीर्घाणि राजभक्तिमयानि भाषणानि विधाय निवर्तन्ते स्म। बहुवारं तदा आङ्गलदेशीया अपि सम्मिलन्त तदधिवेशनेषु। विदुषां राजभक्तानाञ्चैव प्रवेशेन नासीत्तस्यां क्रान्तिः काचिदपि। ब्रिटेनेन दत्तान् महत्त्वहीनाधिकारानुपलभ्य ते समतुष्यन्। १८९० खीष्टाब्दे लोकमान्यः प्रथमवारं राष्ट्रियमहासभाधिवेशने गतः। १८९५ खीष्टाब्दे पुण्यनगराधिवेशनावसरेऽमुना स्वागतसमितेर्मन्त्रित्वमपि निर्वाहितम्। संस्थायां मृदुदलीय-सम्भ्रान्त-राजभक्तानां प्राधान्येन नारोचत तिलकाय सा। स तु दित्सति स्म तस्यै कार्यशीलं जागरूकञ्च रूपम्।

अस्मिन्नेवाब्दे मुम्बई प्रान्तीय-धारासभायाः सभ्योऽपि निर्वाचितोऽयमभूत्। अब्दद्वयानन्तरं पुण्यनगरे प्लेगमहामारी-प्रकोपेन तदपनोदाय प्रख्यापितानां स्वास्थ्यनियमानां बलात्पालनाय राज्यस्य दृढानुरोधेन आङ्गलसैनिकेषु तद्व्यवस्था-भार-समारोपणेन च लब्ध-विविध-दुःख-समुदये जनसमुदाये 'दामोदर हरि चापेकर'नामधेय महाशयेन कृतायाः प्लेगसमितेरध्यक्षस्य श्रीरैण्डस्य लैपिटनेण्ट आयरेटस्य च अतर्कितहत्यया बृटिश-भारतीयजनसमुदायेन तत्समाचारपत्रैश्च ईदृशं बृहदान्दोलनं विहितं यत्परिणामे भारतीयेषु शासकानामातङ्क अत्याचारश्च वृद्धिं गतः। तेष्वेव दिवसेषु स्वसमाचारपत्रे श्रीतिलकेन साधितमासीद् नीतिविहिता शिववीरानुष्ठिता 'अपजलखानहत्या, येन प्रतिपक्षिभिः कृतोऽयं महाकलकलो यद् लोकमान्यः स्वलेखै राजनैतिकहत्याः प्रोत्साहयति। इत्थं लोकमान्यसम्पादितसमाचारपत्रे प्रकाशितैः कतिपयलेखैः शासकवर्गेण सञ्चालिते राजद्रोहाभियोगे सार्धैक-

वर्षाय कारागारे निपातितेनानेन प्रयत्नेन महता निगमान्वेषणं कृत्वा आङ्गल-भाषायां 'ओरायने'-तिनाम्ना विश्वविश्रुतो ग्रन्थोऽलेखि। यत्प्रभावितस्य प्रख्यात-योरुपीय-विदुषो मोक्षमूलरस्य प्रार्थनया समयात् पूर्वमेव कारागारादुन्मुक्तोऽयमभूत। अयमासीत् प्रथमोऽवसरो यत्केनचिद् भारतीयेन राजनैतिकापराधे दण्डो लब्धः। साम्प्रतन्तु विद्यते साधारणीयं वार्ता। संवृत्ताश्च कारागारप्रबन्धे व्यवहारे च विविधाः सुधाराः। तदा तु सर्वथैव वैभिन्न्यमासीत्। केनापि साहसिकेनैव कारावासमधिगन्तुमुत्साहो विधीयते स्म।

१९०५ ख्रीष्टाब्दे लार्डकर्जनेन विहितस्य वङ्गभङ्गस्य विरोधे व्याप्यान्दोलनस्य सञ्चालनाय श्रीतिलकमहोदयेनैकत्रीकृतानि लक्षशो रूप्यकाणि। परं १९०७ ख्रीष्टाब्दे सुरतनगरे संवृत्ते राष्ट्रियमहासभाया अधिवेशने तिलकदलेन साकं 'रासविहारी'-सहयोगिनां मतभेदेन महान् सङ्घर्षोऽभूद् येन श्रीतिलकस्याग्रदलं कतिपयवर्षेभ्यो राष्ट्रिय-महासभामत्याक्षीत्। संवृत्तञ्च तस्यां मृदुदलीयानामाधिपत्यम्।

तस्मिन्नेव समये शासकमण्डलेन स्वावसरं निरीक्ष्य 'केसरी'-समाचारपत्रे प्रकाशितैः कतिपयलेखैः जूनस्य २४ तारिकायां १९०८ ख्रीष्टाब्दे राजविद्रोहस्य जातिगतद्वेष-प्रसारस्य चाभियोगे गृहीत्वा षड्वर्षेभ्यः पुनर्दण्डयित्वा देशाद् निर्वास्य ब्रह्मदेशीय-माण्डला-नगरस्य दुर्गे काष्ठ-प्रकोष्ठे दृग्बन्धिरूपेण संस्थापितः। अभियोगावसरे नितान्त-मार्मिक-भाषणं ददतानेन निगदितमासीद् यद् यद्यपि विचारकैः प्रमाणितोऽहमपराधी तथापि निर्दोषोऽस्मि सर्वथा, अस्ति संसृतौ भौतिकजगतोऽस्य नियन्त्री शक्तिरेका, कदाचित् तस्या विधाने तदुद्देश्यं यस्य प्रातिनिध्यं मया क्रियते स्वातन्त्र्यापेक्षया मम कष्टसहनेनैव अधिकं साफल्यं भविष्यति। कारागारे तीव्रा अपि ता यातनाः सोढ्वा मनस्विभावेन कर्मयोगी तिलकः स्वसमयं स्वाध्यायचिन्तनयोरतिवाह्य तत्रैव सुप्रसिद्धं लोकप्रियं गीतारहस्यमितिनामानं ग्रन्थं व्यरचयत्। १९१४ ख्रीष्टाब्दे प्रथमविश्वव्यापि-युद्धावसरे कारावासादुन्मुक्तोऽयमभवत्।

स्वराज्यप्रदाने-ब्रिटेन-प्रतिज्ञास्वविश्वासं कुर्वतानेन पुण्यनगरे अप्रैलस्य २३ तारिकायां १९१६ख्रीष्टाब्दे भारतीयस्वशासनसमिते (Indian Home

Rule League ) संस्थापनानन्तरं स्वमतभेदं विस्मृत्य "लखनऊ"-नगरे संयोजिते कांग्रेसस्याधिवेशने पुनरपि सहयोगो दत्तः। प्रभावश्च मृदुदलीयानां विनष्टोऽभवत्। सम्प्रति महासभायां तिलकदलस्यैव आधिपत्यं जातम्। अस्मिन्नेवाधिवेशने साम्प्रदायिकैक्याय लीग-कांग्रेस-सहयोग-योजना स्वीकृत्यनन्तरं स्वराज्योपलब्ध्यै विशिष्टकार्यक्रमाणां निर्धारणं जातम्। लोकमान्य-प्रयत्नैः प्रवृत्तेन पर्याप्त-साम्प्रदायिकैक्येनानेन कतिपयवर्षानन्तरं समारब्धेऽसहयोगान्दोलने महत्साहाय्यमभवत्।

सरवेलटैनशिरोल-महोदयेन लिखिते 'भारतेऽशान्तिः' इति पुस्तके समुल्लिखितानां "राजद्रोहमाचरन् तिलको ब्रिटिशसाम्राज्यस्य समूलोन्मूलनमिच्छती" त्यादि वाक्यानां विरोधे लण्डने गत्वा तिलकमहानुभावे तदुपरि मानहानेरभियोगश्चालितः परं साफल्यं नाप्तम।

स्वराज्यप्रदाने समस्तभारतेन खिलाफतविषये यवनैः सह ब्रिटेनेन कृतस्य विश्वासघातस्य प्रतीकारे किमपि कर्तुं समालोचितुमारब्धा देशनेतारः। तदैव पञ्चम्बुप्रान्ते संवृत्तैर्भयानकात्याचारैः क्षुब्धक्षुब्धो दुःखितश्च लोकमान्यः पीडितानां सहायतायै इतरनेतृगणेन साकम् "अमृतसर"—नगरे समागतः। खिलाफतान्दोलने सहयोगदानस्य वचनमपि दत्तं यवनेभ्यः। श्रीगान्धिरसहयोगान्दोलनमारब्धुमुद्यत एवासीत् तदैव भीतभीतेन चकितचकितेन दुःखितेन च भारतवर्षेण समाकर्णितं जुलाईमासस्य ३१ तारिकायां १९२० ख्रीष्टाब्दे निशायां लोकमान्यस्य स्वर्लोकगमनम्।

वस्तुतस्तु "स्वराज्यमस्माकं जन्मसिद्धोऽधिकार" तदवश्यं प्राप्तव्यं भविष्यत्यस्माभिरिति स्वातन्त्र्यमूलमन्त्रमगणितेभ्यो भारतीयेभ्यो पाठयतानेनैव भारते राष्ट्रियताक्षेत्रं सज्जीकृत्य तस्मिन् राष्ट्रियताभावनाऽपूर्वरूपेणाङ्कुरिता कृता। लोकमान्यः प्रमुखराजनैतिकनायकत्वधुरं धारयन् समाजसुधारको लेखकश्चाप्यभवत्। वर्णव्यवस्थाया वर्तमानं विकृतं रूपं वेदविरुद्धं निर्धारितं तेन। अयं श्रीतिलक एवासीद् येनाद्भुतं 'गीतारहस्यं' निर्माय निःशेषेऽपि संसारे श्रीमद्भगवद्गीताया यशःसौरभं विस्तारितम्। कर्मयोगपक्ष एव परमपुनीतग्रन्थस्यैतस्याभिप्रायः प्रदर्शितः। एकदा तु भारतीयराजनीतिकविहायसि 'बाल-लाल पाल' इत्येतेषामेव महिमा प्रसृतोऽभवत्। अस्य

यमपि प्रमुखतमोऽभवत्। तत्कार्येषु पूर्णरूपेण सहयुञ्जन् १९०९, १९१८ ख्रीष्टाब्दयोस्तदधिवेशनाध्यक्षोऽपि निर्वाचितोऽभूत्। राष्ट्रीयक्षेत्रे मृदूग्र-विचारधारयोरयं सामञ्जस्यमेव स्वीकृतवान्। अस्यैव प्रयत्नैस्तिलकदलस्य गोखलेदलेन सह सन्धिः संवृत्तः। १९३२-१९३३ ख्रीष्टाब्दयो राष्ट्रिय-महासभाधिवेशनयोः प्रधानत्वपदे निर्वाचितोप्ययमधिवेशनात्पूर्वमेव शासकवर्गेण निगृहीतः।

१९१० ख्रीष्टाब्दतः १९१९ पर्यन्तं इम्पीरियल लेजिस्लेटिव कौंसिलस्य (Imperi·l Legislative Council) सदस्यो भूत्वा १९१९ ख्रीष्टाब्दे रौलट-विधानस्य विरोधे त्यागपत्रं दत्तवान्। विधाननिर्मातृ-परिषदोऽधिवेशने पञ्चाम्बुप्रान्ते सैनिकशासनस्य तत्कृतात्याचाराणाञ्च विरोधे सेनापतिं "डायरं" दोषिणं संसाधयतानेन पञ्चहोरा-पर्यन्तं भाषणमकारि। यत्प्रभावितेन डायर-महानुभावेन क्षमा-प्रार्थना कृता। पीडितानां सहायतायै राष्ट्रिय-महासभाया अमृतसरीयाधिवेशनस्याध्यक्षो भूत्वा पञ्चाम्बुप्रान्ते समागतः। अमुना १९१६ ख्रिष्टाब्दतः १९१९ पर्यन्तं भारतीयौद्योगिकसमितेः सदस्यत्वेन मतविरोधे स्वः पृथग् लेखोऽलेखि। यथाशक्ति च विधाननिर्मातृ-संसदि लोकहिताय प्रचुराणि कार्याण्यनुष्ठितानि।

प्रचलित-शिक्षाप्रणालीमालोचयता तेन निष्कर्षोऽयमधिगतो यदियं भारतीयसंस्कृतेः विनाशेन राष्ट्रीयगौरवं दूरमपसारयन्ती भारतीय-नव-युवकान् राजसेवकत्वायैव प्रगुणीकरोति, उपयोगिता-राहित्येन च स्वास्थ्य-मेव पातयन्ती भारतीयेभ्यो नितान्तमहितकरी विद्यते। आवश्यकता तु अस्ति साम्प्रतं राष्ट्रियता-प्रसारणस्य, प्राचीनसंस्कृतौ गौरव-वर्धनस्य उत्तम-शिक्षायाः, श्रेष्ठस ततिनिर्माणस्य च। परमिदं सर्वमुपेक्ष्य आङ्गलमाध्यमेन पाश्चात्य-साहित्यमेव नवतरुणान्तःकरणमारोप्यते। भारतीयसाहित्यस्य च न श्रूयते नामापि सर्वमेतद्विचार्य श्रीमता मालवीयेन प्रचलित-शिक्षा-पद्धतिजनितानां निखिलदोषाणामपनोदाय १९१६ ख्रिष्टाब्दे काश्यां हिन्दू-विश्वविद्यालयं संस्थाप्य तत्पीठस्थविरपदे (Vice Chancellorship) स्वयमेवाधिष्ठितोऽभवत्।

१९२२—२३ ख्रीष्टाब्दयोर्हिन्दूमहासभाया अध्यक्षो भूत्वा १९२४

खीष्टाब्दे केन्द्रीयव्यवस्थासभायाः सदस्यत्वं विरोधिदलस्य नायकत्वञ्च सम्पाद्य समुद्रतटकर-विधानस्य विरोधमाचरंस्तां परित्यक्तवान्। १९३३ खीष्टाब्दस्य सितम्बर-मासे साम्प्रदायिकनिर्णयानुसारं तथा कथितास्पृश्य-वर्गस्य विशालवर्गात् पृथक्करणस्य विरोधे यरवदा-कारागारे श्रीगान्धिना गृहीतस्य मरण-पर्यवसायिव्रतस्यावसरे सपद्येव श्रीमालवीयो मुम्बई-नगर्यां गत्वा हिन्दू-नेतॄणां सम्मेलनमेकं विधाय स्वयञ्च तदध्यक्षत्वेन सन्धिमनुष्ठापितवान्। यदनुसारं प्रान्तीयधारासभासु नियतहिन्दु-स्थानेभ्योऽस्पृश्य-वर्गीय कतिपयस्थानानां संविभागः संवृत्तः, परन्तु तेषां गणना हिन्दुष्वेव भविष्यति। एतदनन्तरं मालवीयमहानुभावेन राजनीतिक-जीवने कश्चिद् महत्त्वपूर्णो भागो न गृहीतः। कदाचिदेव भारतीय-समस्यासु स्वविचारान् प्रकटयति।

यद्यपि स्वविचारान् प्रकटयितुं न कदापि विरतोऽयमभवत्, तथापि राष्ट्रियमहासभायां मातृवत् श्रद्धा-[illegible] परिपूर्णमन्तःकरणं सर्वदा धारयति। श्रीजवाहरलालेनापि स्वात्म[illegible]तेऽस्य विषयेऽलेखि यत् "श्री-मालवीयः स्वस्थापित-विश्वविद्यालयस्य वित्तादिसाहाय्येन स्थायित्वप्रदानाय तेषां धन-कुबेराणां नृपाणाञ्च मुखमवलोकयति, येभ्यः प्रगतिः क्रान्तिश्च स्वसत्ताविनाशाशङ्कया न रोचते, स्वसत्ता-स्थिरतायै च मध्यकालीन-दृष्टिकोणमेवाभिरुचितं तेषाम्। तादृशानां सहयोगाभिलाषेण निज-पुरातन-विचारैश्च स्वराज्यप्राप्त्यै शान्तः संकुचितश्च पन्था एव रोचते श्रीमालवीयाय इति। राष्ट्रीयमहासभाया वर्तमाननेतृ-मण्डलेन गृहीतमार्गे सहयोगदानं दुष्करं मत्वा कतिपयवारं मतभेदमप्याचरति। परं सभायाः संस्थापकत्वेन, तया सहाहृदयप्रेम्णा, समुद्रिक्तराष्ट्रियभावनया, वर्तमानप्रगत्या साकं किञ्चित्सम्बन्धेन तद् हृदयं राष्ट्रियकार्ये स्वीयसहयोगं प्रदातुमभिलषति। अन्तर्द्वन्द्वेनानेन बहुधा द्विविधाकुलोऽयमवलोकितः" इति। राष्ट्रिय-सभायां मृदुदलीयानामाधिपत्य-समये नहि तान् पूर्णरूपेण परित्यक्तुं समुदसहत। गान्धेरभ्युदयकालेऽपि मतभेदेन विरोधमाचर। असह-योगान्दोलने न किमपि साहाय्यं प्रादायि। परं १९३०–३२ खिष्टाब्दयोः पूर्णरूपेण देशनायकत्वधुरं संधार्य कृता कारावासयात्रापि। यवनप्रसन्नतायै

धारितायां राष्ट्रियमहासभानीत्यां सदैव स्वकीयाऽसहमतिः प्रकटिता। हिन्दुविश्वविद्यालयरूपे शिक्षा-प्रसारविषयकं रचनात्मककार्यं चिरस्थायि भविष्यति। महासंस्थाया अस्या भविष्यदत्युज्ज्वलं प्रतीयते। परमस्यामहर्निशं लग्नस्य श्रीमालवीयस्य कार्यक्षेत्रं समस्तदेशस्य विशालक्षेत्रात्सङ्कुचितीभूय नितान्तमेव सीमितं संवृत्तम्। सम्भवतोऽत एव श्रूयते यद् यदि श्रीमालवीयः काश्यां हिन्दूविश्वविद्यालयस्य स्थापनां नाकरिष्यत् तर्हि जीर्णोऽप्ययं न केवलं स्वकमात्मानं भारतीयराष्ट्रमपि प्रशस्तोन्नतिशिखरमारोपयिष्यत्। अत्युत्कृष्टप्रेरक-शक्ति-युक्तोऽस्ति महामनाः, हिन्दुभावः सदैवास्मिन् जागरूकस्तिष्ठति।

तथापि श्रीमालवीयोऽस्ति महान्। महत्यश्च सन्ति स्वदेशाय अर्धशताब्दीतोऽप्यधिककालपर्यन्तं निरन्तरं क्रियमाणा अस्य सेवा अपि। स्वतपोमय-पुनीतजीवनेन देशस्य प्रारम्भिक-राजनीतिक-विकासकाले महती प्रेरणाऽनेन दत्ता। स्वपरमवैदुष्येण भाषणेषु तां रससम्पृक्तां रसधारां प्रवाहयति, अनेकशो मनुजा यया परिप्लाविताः पूताश्च भवन्ति। सामाजिकक्षेत्रे धार्मिकक्षेत्रे चाप्यनेन चिरस्मरणीयाः सेवाः कृताः सन्ति। सनातनधर्मसम्मेलन-महावीरदलादीनां निर्माणं कृत्वा सनातनधर्मस्यापि पुनरुत्थानमनुष्ठितम्। सर्वाण्यप्यस्य कार्याणि पुरातनगौरववर्धनायैव भवन्ति। भारतीयपुनीतसंस्कृतिं श्रेष्ठतमां मन्यते। प्रवासेऽपि सनातनधर्म-नियमान् न विस्मरति। इङ्ग्लैण्डं प्रति गच्छन् शुद्धतायै श्रीजाह्नवीजलस्य घटद्वयमपि सहैव नीतवान्। अयमिच्छति वैज्ञानिकरीत्या सनातनधर्मस्य पुनरुद्धारम्। तदैव संसारे शान्तिसाम्राज्यं प्रसृतं भविष्यतीत्यस्य विश्वासः। स्वजीवितावस्थायामेव देशस्वातन्त्र्यं वैदिकधर्मोद्धारञ्च द्रष्टुमिच्छति। परमेश्वरकृपया सम्भोभवीति यदयं स्वजीवन एव सर्वमेतत्प्रत्यक्षं पश्येत्। किमपि स्याद् देशस्य जीवितनायकेषु वृद्धवशिष्ठस्त्वयमेवास्ति।×



× हा हन्त पूर्वलिखितस्यास्य जीवनचरितनिबन्धस्याद्य प्रकाशनसमये महामना मालवीयः पृथिवीतले न विद्यते। वर्षे (१९४६) ख्रीष्टीये नवम्बर मासस्य द्वादशतारिकायां महानिर्वाणं जातमस्य महात्मनो वृद्धवशिष्ठस्य।

# (११) पण्डित जवाहरलाल नेहरुः ।

## (ले० प्राध्यापकः श्री० पं० रामनाथशास्त्री विद्यालङ्कारो हिन्दीप्रभाकरः)

[ भारतवर्षस्य हृदयसम्राट्, विश्वविश्रुतो नेता, क्रान्तिकारी, स्वकार्येषु दृढविश्वासी अतिगम्भीरनीतिः, निर्भीक-हृदयः श्रीजवाहरलाल पण्डितः, चरितेऽस्मिन् लेखकेन साधु विवृतं जीवनमस्य भारतमातुः परमस्नेहास्पदस्य पुत्रस्य ]

कोऽयमस्ति भारतीय-तरुणानां हृदयसम्राट्, स्वपुनीतचरितैः समस्तानामपि भारतीयानामन्तःकरणेषु नितान्तमुत्साहसञ्चारको महनीय-यशा महापुरुषः ? को हि सुखेन निजजीवनयापनाय समुचितोपकरणविहीनानां दीनानां हृदयविद्राविणीं दुर्दशामवलोक्य तद्विद्रावणाय सततं यतते ? केन पारतन्त्र्य-पाश-विपाशनाय स्वजननी-जनकादयोऽपि स्वातन्त्र्य-मखे आहुतित्वेनोपकल्पिताः सन्ति ? श्रीगान्धिशब्दानुसारं को भारतवर्षस्य परमोज्ज्वलं रत्नं यस्मिन् दोषलेशोऽपि न सम्भाव्यते, यच्च स्फटिकवत् सर्वत्र भासते ? कस्य शब्दैः समनुप्राणितो भूत्वा देशोऽभिनवचैतन्य-मुपलभ्य स्वतन्त्रतायै सर्वस्वमपि समर्पयितुं समुत्सहते ? स्वदुःखमुपेक्ष्य-को देशकार्यं निरन्तरं कुरुते ? अयमस्ति श्रीजवाहरलालः । स एव जवाहर-लालो येन स्वजीवनस्यार्धमितो भागः केवलं देशसेवायै कारागारेष्वेव व्यतियापितः । एकमेवोद्देश्यं "भारतवर्षं स्वस्वातन्त्र्यमुपलभ्य समुचितं पदं प्राप्नुयात्" एनमाकुलयति सततम् । पर-पद-दलिताया जनताया: समु-न्नत्य कृते: कार्यकलापैः साम्प्रतमयं समभवत् श्रीगान्धेरनन्तरं राष्ट्रियसं-स्थायाः नितरां लोकप्रियः प्रभावशाली च नेता ।

नवम्बरस्य चतुर्दशतारिकायां १८८९ तमे खिष्टाब्दे कश्मीरोद्भव-सारस्वत-ब्राह्मण-कुले प्रयागनगरस्य मीरगञ्ज-प्रतोलिकायां जन्म लेभे महा-

---

अन्तकाले च वङ्गप्रान्तीय—"नवाखली"—घटित-सांप्रदायिकघटनासु दुराचार-दुर्यवनकृतात्याचारान् निशम्य भृशं चेखिद्यते स स्वान्तमस्य । परमात्मा हिन्दुजातौ जातामिमां त्रुटिं सद्यः पूरयेत् । ईदृशानेव धर्मरक्षणसक्षणान् नेतॄन् भारतभूमौ उत्पादयेत् ।

नुभावोऽयम् । जनकोऽस्य पं० मोतीलालो जननी च श्रीमती "स्वरूपरानी" आसीत् । जन्मतश्चिरकाल-पूर्वं पूर्वजानां दिल्लीनगरे नेहर-तटे वास्तव्यत्वेन "नेहरु' इत्युपनाम्नाऽप्ययं विश्रुतो जातः । तदानींतनेषु वाकीलेषु प्रसिद्धतमस्य श्री मोतीलालस्य वैजयन्त-प्रासादतुल्यं 'आनन्दभवन' इत्याख्यनिवासगृहं समस्तैश्वर्योपकरणजातेन परिपूर्णमासीत् । बहुवारमनेन एकस्मिन्नेवाभियोगे लक्षपरिमितानि रूप्यकाणि गृहीतानी । आङ्गलदेशीया अपि पं० मोतीलालस्य गृहं सभागन्तुं सर्वदा समुत्कण्ठिता अविद्यन्त । श्रीजवाहरलाल आसीदस्यैकमात्रः पुत्रः । अतोऽस्य पालनादिकमपि राजकुमार-तुल्यमभूत् । पञ्चदश-वर्ष-वयःपर्यन्तन्तु शिक्षणमप्यस्य गृह एव संवृत्तम् । अनन्तरमल्पीयस्येव वयसि स्वपितृभ्यां साकमाङ्गलदेशम्प्रति गतवानेषः । तत्र महता प्रयत्नेन चर्चिलादिविश्व-विश्रुतानामाङ्गलदेशीय-महानुभावानां शिक्षाप्रदायिन्यां पुरातन-परम्पराभिः परम-प्रख्यातायां "हैरो" इत्याख्य-शिक्षण-संस्थायां प्रविष्टः । पश्चात् 'ट्रिनिटी कैम्ब्रिज" इत्याख्ये विश्वविद्यालये शिक्षां समाप्य 'बी० एस० सी०, एम० ए०' च भूत्वा वाकीलोऽपि ( Bar At Law ) संवृत्तः ।

पाश्चात्यदेशेषु भ्रमताऽनेन यदा सर्वत्रापि नूतनं चैतन्यं, सर्वविधा स्वाधीनता विचित्रः समुत्साहः, विविधविधा आविष्कारा नवञ्च जीवनमवालोकि; स्मृतिपथमारूढा तदा भारतीया दुरवस्था—क्व कल्पनातीत-वैभवशालिन आङ्गलदेशीयाः, क्व चान्नाभावेन अहर्निशं म्रियमणाः कोटिशो भारतीयाः ? अप्रत्याख्येयमेकं दुःखमासीद् येनावेशितं नवयुवकस्य जवाहरस्य हृदयम् । तच्चेतसि ऐश्वर्य—परिपालित-स्वजीवनायापि घृणाङ्कुरः समुत्पन्नः स्वप्रियजन्मभूम्या नूतन—पुरातन-दशयोर्महदन्तरमवलोक्य एकमेव कारणं पारतन्त्र्यमेतद् दुर्दशाजननेऽस्य मनसि समारूढम् । यदि महनीया मातृभूमिः पर-पदाक्रान्ता न स्यात्तदेयमपि समुन्नत देशानां पङ्क्तौ प्रामुख्यमाप्नुयात् । यतः पुराप्यस्य गौरवं सर्वस्मिन्नेव संसारे भासमानमासीत् । इदमेवासीत् कारणं येन प्रभावितो जवाहरलालो विदेशे पठनावस्थायां प्रतिज्ञातवान् स्वस्या मातृभूमेः पराधीनता-पाशान विमोक्तुम् । कथमेतत्स्यादिति चिन्ताकुलोऽयं १९१२ ख्रिष्टाब्दे प्रत्यावृत्तो राष्ट्रियमहासभायाः कार्यजाते स्वाभि-

वाञ्छितपूर्त्यो आशामवलोक्य प्रथमवारं तदधिवेशने सम्मिलितोऽभवत्।

स्वपित्रा सह प्रयागीय-प्रधान-न्यायालये ( High Court ) वाक्कीलकार्यमारब्धवान्, १९१६ ख्रिष्टाब्दे कमलया सह विवाहः, १९१७ अब्दे च इन्दिराया जनिरभूत्। राष्ट्रचिन्ताकुलितान्तःकरणायास्मै वाकील-कार्यं सन्तोषं न प्रदत्ताति स्म। अतो विहाय तत् १९१४ ख्रिष्टाब्दे दक्षिणा-फ्रीकाभूखण्डे प्रवासिभारतीयानामधिकाररक्षार्थं समारब्धे सत्याग्रहे ५००० रूप्यकाण्येकत्रीकृत्य श्रीगान्धि प्रति प्रेषितवान्। १९१८ ख्रिष्टाब्दे भारतीय-स्वशासन-संस्थायाः ( Indian Home Rule League ) मन्त्रित्वं निर्वाह्य राष्ट्रियमहासभायां ( Congress ) च प्रविश्य आगामिवर्षे रौलट-विधानस्य (Rowlat Act) विरोधाय प्रवृत्त आन्दोलनेऽयं पूर्णोत्साहेन निर्भीकमानसेन, साहसेनैकनिष्ठत्वेन च कार्यं कृतवान्। तदैव चकित-चकितेन विश्वेन समालोकि यदनेन यशस्वी वैभवशाली च स्वपितापि पूर्णरूपेण राष्ट्रियक्षेत्रेऽवतारितः।

श्रूयते तेषु दिवसेषु पं० मोतीलालः "कारावासे कीदृशानि कष्टानि भवन्ति किं मम प्रेयान् पुत्रोऽप्येतानि समनुभविष्यति" इति परीक्षणार्थं स्थण्डिल एव सुप्त्वा कतिपयरात्रीश्चिन्ताकुल एव क्षपितवान्। श्रीगान्धि-रपि जवाहर-वारणाय समाहूतः जनक-तनययोर्मनोमालिन्यमपि जातम् परमयमासीत् श्रीजवाहरलालो येन स्वपिता विषयभोगेषु क्षपिताशेषवया अपि सर्वस्वस्यापि त्यागाय प्रेरित एव। पुत्र-स्नेहेन देश-प्रेम्णा वा अन्ततो-गत्वा पं० मोतीलालस्त्यागमूर्त्तिः समपद्यत। अनेन कियान् लाभोऽभवद् देशस्य नैतत् कथयितुं पारयामो वयम्। जवाहरप्रेरणया सर्वमेव कुलम् आबाल-वनिता-वृद्धं देशसेवायां लग्नम्। गतवर्षेष्वसहयोगान्दोलने द्विवारं कारावासयात्रापि कृतानेन। असहयोगावसाने परमोत्कृष्टयोग्यतया स्वजन्मभुवे त्यागेन च प्रयागीय-नगर-सभाया जनतया निर्वाचितः प्रधानो भूत्वायं तत्रानेकान् सुधारान् कृतवान्। १९२३ ख्रिष्टाब्दे नागपुर-नगरे पताका रोहण-सत्याग्रहस्य संघटनं विधाय कोकोनाडा कांग्रेसावसरे प्रथमवारं सञ्जनितस्य स्वयं-सेवकदलस्याध्यक्षो भूत्वा तस्मिन्नेवावसरे प्रथमवारं राष्ट्रियमहासभायाः प्रधानमन्त्रित्वायापि निर्वाचितोऽभूत्। अस्मादेव

कालादारभ्य सम्प्रति-पर्यन्तं सर्व-रूपेणायं देशस्यैव सञ्जातः। नहि क्षणमात्रयापि स्वस्मा अनेन चिन्त्यते सर्वथा स्वकीय आत्मा विस्मारितः। सेवाया आदर्श एवाक्षिलक्ष्यीकृतो वर्तते। नहि कर्हिचिदपि वाञ्छति विहिताधिकारप्राप्त्यै।

१९२६ खिष्टाब्दे योरूपे गतोऽयमपि साम्राज्यविरोधिपारिषदोऽधिवेशने प्रधानोऽभवदेकदिवसाय। अनन्तरं रूसदेश ( Russia ) भ्रमन् तत्र प्रसृत-विचारधारया प्रभावितो भूत्वा प्रत्यावृत्य च भारतवर्षे सर्वतः पूर्वं साम्यवादि-विचारधारां प्रचारितवान्। १९२८ खिष्टाब्दे स्वकीयाऽविरलप्रयत्नैर्भारतीयस्वाधीनता-सङ्घः ( Indian Indepndent's League ) संस्थापितः। १९२९ खिष्टाब्देऽयमखिल-भारतीय-भारतीय-श्रमिक-संघ-समितेः( All India Trade Union Congress ) राष्ट्रियमहासभायाश्च निर्वाचिताऽध्यक्षोऽभवत्। अस्मिन्नेव वर्षेऽस्य नेतृत्व लवपुरे पूर्णस्वाधीनतायाः प्रस्तावः स्वीकृतो जातः, जनवरीमासस्य २६ तारिकायां १९३० खिष्टाब्दे विश्वस्मिन्नपि देशे प्रथमः स्वाधीनतादिवसः सम्मानितः समजायत।

अस्मिन्नेव वर्षे विश्वव्याप्यल्पार्घता-प्रभावेण भारतीयकृषकेषु श्रमिकेषु चासन्तोषाङ्कुरो जातः। बहुवारञ्च कृतया प्रार्थनयापि -ब्रिटिश-साम्राज्याधिकारिमण्डलेन भारताय पूर्णस्वाधीनता न स्वीकृता। अतः श्रीगान्धिना समारब्धेऽसहयोगान्दोलने षण्मासावधिकदण्डेन कारागारे संस्थापितोऽयं तत्र नैनीताल-कारागार एव बंदीकृतेन स्वपित्रा साकं गान्धि-इरविन-सन्धि-सम्बन्धे विशेषधूमयानेन श्रीगान्धिना सह परामर्शाय यरवदा-कारागारं प्रापितोऽभूत्। अयमासीत्तदानींतनो राष्ट्रियसभाया अध्यक्षः एतदनुमतिमन्तरासीद्दुःशकः सन्धिः। १९३२ खिष्टाब्दे तत्सन्धिविच्छेदे लार्डविलिङ्गडनस्य शासनसमये संयुक्तप्रान्तीय त्रस्त-पीड़ित-कृषकाणां सेवया वर्षद्वयाय दण्डितोऽपि मातू रुग्णतया पूर्वमेवोन्मुक्तोऽभवत्।

१९३४ खिष्टाब्दे विहार-भूकम्पानन्तरं कालिकता-नगरे दत्तेन केनचिद्भाषणेन राजद्रोहापराधे पुनर्वर्षद्वयाय बंदीकृतः कमलाया रुग्णावस्थया किञ्चिदपि प्रति बन्धमनूरीकृत्योन्मुक्तो भूत्व।मरण-शय्यापन्नायाः कमलाया भैषज्यार्थं स्वीटजरलैण्डे गतः। परं हन्त! वराकं जवाहरं संसारयात्रायामेका-

किन्नं विविधविधःदुःख-दावदहन-दग्धहृदयञ्च विधाय कारागृहगृहीत-क्षय-रोगेण सा कथामात्रविषयिण्येव संवृत्ता। संप्रति पूर्वमेव जननी-जनकादि-विरहितस्यैकलस्य जवाहरलालस्यान्तरिकं दुःखं को जानाति। नक्तन्दिवं देशकार्येषु लग्नस्यास्य दुःखोपशमाय नहिं किमपि कर्तुं शक्यते।

१९३६-३७ ख्रिष्टाब्दे भारतीय-राष्ट्रिय महासभाया-अध्यक्षपदे विनियुक्तेनानेन सार्वजनिक निर्वाचनावसरे निःशेषस्यापि देशस्य परि-भ्रमणं कृतम्। येन प्रभूतं साफल्यमाप्तम् अष्टसु प्रान्तेषु राष्ट्रियमन्त्रिमण्ड-लानि संवृत्तानि। पदग्रहणविरोधमाचरन्नप्ययमनुशासनं मन्वानः स्वकीय-सह-योगमदादेव।

१९३८ ख्रिष्टाब्दे पुनर्योरुपे गत्वा गृहयुद्धग्रस्तस्य स्पेनस्य चीनस्य च भ्रमणानन्तरं देशं प्रत्यागतेन तेन १९३९ ख्रिष्टाब्दस्यान्तिमेऽर्धे गोरक्षपुरे वर्षचतुष्टयावधिको दण्डो लब्धः। आगामिवर्षे युद्धविरोधि व्यक्तिगतसत्या-ग्रहानन्तरमुन्मुक्तोऽपि क्रिप्सयोजना-वैकल्येन देशे समुत्पन्न कटुवातावरणे 'भारतं त्यजते'ति प्रस्तावानन्तरमगस्तस्य नवमतारिकायां १९४२ ख्रिष्टाब्दे मुम्बईपुर्यां प्रातःकाल एव गान्धि-प्रभृतिनेतृगणेन साकमयमपि निगृहीतो भूत्वा १९४५-ख्रिष्टाब्दस्य जूनमासे वैवल-प्रस्तावानां विचारणयोन्मुक्तः सा-म्प्रतं तत्प्रस्तावाऽस्वीकरणेऽपि १९४२-ख्रिष्टाब्दे संवृत्तासु घटनासु गर्वं प्रकट-यन्, सुभाष-संस्थापितायाः स्वतन्त्रभारतसेनायाः सेनानायकानामुपरि शास-कवर्गेण सञ्चलितेष्वभियोगेषु तत्कार्यगर्वित-तया तेषां सुरक्षायै यतमानः, देशमागामि-स्वातन्त्र्य-संग्रामाय सज्जीकुर्वन् निर्भीकमानसेन परिणाममम-चिन्तयन्नेव भाषणानि कुर्वाणो निर्वाचनेषु साफल्यं प्राप्तुं समन्तात् पर्यटति, पाकिस्तानविरोधि-प्रचारञ्च करोति।

भारत-स्वातन्त्र्यविरोधाय ब्रिटेनपार्श्वे द्वे एवास्त्रे विद्येते—स्वजनितः साम्प्रदायिकमतभेदः, देशीय-मण्डलाधिकारिणश्च। साम्प्रदायिकविषये सम्प्रति-राष्ट्रिय-सभायाः स्पष्ट-स्थिरनीत्यङ्गीकरणेन एतेषु एव निर्वाचनेषु शृंखलेयं विच्छिन्नेव दरीदृश्यते, शिष्टा चेदागामिनिर्वाचनेषु-अपगमिष्यति। एतत्सम्पादनायैव श्रीजवाहरलालो यवननायकान् प्रति गमनापेक्षया साधारण-जनसम्बन्धस्य ( Mancontact scheme ) योजनामाविष्कृतवान्।

द्वितीयशृङ्खलाविच्छेदाय देशीय-राज्य-जनतया सह सम्पर्क-स्थापनाय निखिलभारतीय-देशीयजनपरिषदः ( All Indian State Peoples Conference ) सभापतित्वं स्वीकृत्य जनतायां जागरामुत्पाद्य नृपेभ्योऽधिकारप्राप्त्यै तां समुत्साहयति ।

अयमभिलषति राष्ट्र-उद्योगानां प्रसारम् । अत एव राष्ट्रियोद्योगसमितेः ( National Planning Committee ) अध्यक्षोऽप्ययमेवास्ति । न रोचतेऽस्मै साम्राज्यवादोऽधिनायकवादश्च । राष्ट्रियमहासभायामयमस्ति विशिष्टैका शक्तिः, परं स्वशक्तिवर्धनायेतरनेतृवदनेन नहि किमपि दलं निर्मितम । नास्ति कश्चिदस्य मित्रमनुगश्च, यद्यपि समस्तेऽपि भारतेऽस्य प्रभावः सर्वेभ्योऽधिक एव विद्यते । मित्रभावविषये यूसफ मेहरअलीखानेन पृष्टोऽयमेकदा-अवादीद् यदहं जनतायाः समक्ष एव स्वकीयमात्मानं प्रकटयितुमिच्छामि । समाजवादिधारां प्रवाहयन्नपि कतिपयविषयेषु स्वविरोधमपि दर्शयति । अयं राजनीतितो धर्ममीश्वरञ्च पृथक्कर्तुमिच्छति । राष्ट्रमेवास्मै सर्वतः प्रमुखमस्ति । राष्ट्रद्रोहमाचरयन्तः साम्यवादिनोऽपि (Communists ) नास्मै रोचन्ते । नैव केनापि कदाचिदपि स्मयमानोऽयमवलोकितः । अयमस्ति गम्भीरविचारकोऽध्ययनशीलः, उत्कृष्टलेखक आङ्गलभाषायाः पण्डितप्रकाण्डं च । अयं राजनीतिपटुः क्षिप्रकारी, स्वभावेनातितीक्ष्णः, विश्लेषणात्मकबुद्धिसिद्धान्तप्रेमी च विद्यते । अस्य आङ्गल-लेखनशैली ऑक्सफोर्डीय-प्रख्यात-समालोचकेन श्रीएडवर्डटामसन–महाशयेन विश्व-विदुषा श्रीगुन्धरेण च प्रशंसितास्ति । अनेन आङ्गलभाषायां "मामकी-कथा", विश्वेतिहासस्य प्रकाराः", "भारतवर्षस्य समस्याः", "पितुः पत्राणि पुत्रीं प्रति", "स्खलन् संसारः" इत्यादीन् लोकप्रख्यातानि पुस्तकान्यलेखिषत । अन्यभाषास्वपि सर्वेषामनुवादाः प्रकाशिताः सन्ति ।

श्रीगान्धिना प्रवर्तिताम् अहिंसात्मकनीतिं श्रीजवाहरलालो भारतस्वतन्त्रतायै साधनत्वेन स्वीकरोति न तु साध्यत्वेन । अस्मिन् पौरस्त्य-पाश्चात्य-सभ्यतयोः सम्मिश्रणं सम्यक्तया अवलोकयितुं शक्यते । वर्तमान-सामाजिक-प्रबन्धं भारतायाहितकरं मन्वानस्तत्सुधाराय प्रयतते । सम्पत्तेः राष्ट्रियकरणं वाञ्छति । स्वकार्यकलापेन भारतीयान्तःकरणेष्वयं स्वस्थानं कृतवानस्ति ।

येनायं जनानां श्रद्धाकेन्द्रं संवृत्तः। अत एवैतद्विषये 'युवराजेन सह मैत्री-प्रभृतयः प्रचुराः कल्पितकथा अपि प्रसृताः सन्ति। साम्प्रतमयमेवास्ति भारतसरकारस्य प्रधानो मन्त्री। भारतवर्षस्य नेतृत्वाय श्रीगान्धिनोद्घोषितमुत्तराधिकारमावहन्तमप्येनमेव स्वमार्गप्रदर्शनाय पश्यन्ति विश्वेऽपि आशामहाद्वीपवर्तिनः पौरस्त्या देशाः। भारतवर्षं "स्वचरमलक्ष्यं प्रति नेतुं चिरञ्जीवतादयं महापुरुषः" इत्येवाशास्ते सर्वदा।

## (१२) महात्मा गान्धिः।

(ले० श्री पं० रामनाथशास्त्री प्राध्यापकः विद्यालङ्कारो हिन्दीप्रभाकरः)

[ विश्वविख्यातो भारतीयो महान् नेता महात्मा गान्धिः, अहिंसा सत्यं चेति द्वावेव तस्याटलौ सिद्धान्तौ। अहिंसात्मकाऽसहयोगरूपस्याऽमोघास्त्रस्याऽयं जन्मदाता, गंभीरः, मृदुदलीयः, दीर्घदर्शी संयमी तपस्वी चायम्, भारतीयस्वराज्यकर्णधारः। ]

विश्वमङ्गलाद् भारतीय-समुच्च-संस्कृतेर्विलुप्ततया समस्तेऽपि संसारे साम्प्रतं भयङ्करभौतिकवादस्य प्रसार उत्तरोत्तरं वरीवृध्यमानो वरीवर्त्ति। तदुत्पन्नस्वार्थवादस्य घनान्धकारेण क्षपित आदर्शवादो विश्वेषां मनस्तु सततमशान्तेरुद्रेकं करोति। विद्वांसो विज्ञानवादिनश्चाऽपि शान्तेरुत्पादने साहाय्यमदत्त्वा नक्तन्दिवं विघातकास्त्राण्याविष्कृत्य विनाशोपयानेव विचिन्तयन्तः सन्ति। परं सन्ति केचन देवदूता दयार्द्रहृदया ये श्वासरोधिवातावरणस्यैतस्य विद्रावणाय निजामूल्यजीवनान्यपि शङ्कास्पदानि विधाय प्रतिपक्षिजनापवादं सहमाना अपि विश्वकल्याणाय प्रयन्तते। ते स्वबुद्धिवैभवेन विश्वमङ्गलाय अन्ततस्तानेव नियमान् निर्धारयन्ति येषां प्रभूतप्रचारः सम्यक्तया भारतीय-संस्कृतेरक्षयनिधिपूपनिषद्गीतादि-ग्रन्थरत्नेषु संदृश्यते, यत्प्रभावेण पुरा चिरकालपर्यन्तं भारतवर्षं शान्तिस्थलमभूत्, सर्वजगति च मङ्गलं व्यतानीत्। अस्मिन् सङ्घर्षमये समये श्रीगान्धिरेव तत्प्रातिनिध्यं करोति। निजजीवने विविधविधप्रयोगान् विधाय निर्धारितं तेन यत्संसा-

रोद्धरणेऽहिंसा-सत्ययोरेव सामर्थ्यमस्ति न तु विध्वंसकविज्ञाने। दर्शित-ज्ञानेन स्वचरमलक्ष्यं प्राप्तुं त्यागमयमाचरणमेव भद्रमस्ति। भोगवादेन तु स्वार्थपरायणतामुत्पाद्य संघर्षेण युद्धान्येव जन्यन्ते, यैर्मानवतायाः नाशस्तु भवत्येव, आशान्तेर्बीजान्यपि नापगच्छन्ति क्षणमात्राय। अद्य आपद्ग्रस्ताय जगते गान्धिगृहीतादर्शस्य परमावश्यकता वर्तते। अतो विद्यतेऽस्य चरितमवश्य-मेव शिक्षावहम्।

श्रीगान्धिः पोरबन्दरनगरेऽक्तूबरस्य द्वितीयतारिकायां १८६९ ख्रिष्टाब्दे राज्यसचिवसद्मनि "पुत्तलीबाई" कुक्षितो जन्म गृहीत्वा "भावनगर" "राजकोटयो" मैट्रिकपर्यन्तं शिक्षितो जातः, तात्कालिकप्रथानुसारमेतद्विवाहः "कस्तूरबाई" नाम्न्या सार्धमल्पीयसि वयसि समवर्तत। गृहे च धार्मिक-वातावरणस्य प्राधान्येनास्मिन्नपि तत्प्रभावः प्रभूततयाऽपतत्। अतो वाकील-शिक्षायै इङ्गलैंड-गमने मात्रा विविधबाधाः समुत्थापिताः। परन्तु प्रयत्नेन महता तया सह बद्धप्रतिज्ञो भूत्वा इंगलैण्डे वाकीलशिक्षाया ग्रहणानन्तरं पूर्वं मुम्बईनगर्यां परतश्च कस्मिंश्चिदभियोगे दक्षिणाफ्रीकाभूखण्डं प्रति गत्वा तत्र वाकीलकार्यं कुर्वन्नयमवलोकितवान् यत् तत्र प्रवासिभारतीयेषु भारतीय-तयैव पञ्चविंशति-निष्क-शुल्कग्रहणेन, भारतीयविवाहानामनौचित्यविधानेन विशेषभूभागेषु निवासप्रतिषेधेन च नित्यं नूतना अत्याचारा आपात्यन्ते। ये च गान्धिनापि स्वयं समनुभूताः। तद्विरोधाय भारतीयानां स्थितिसुधाराय च निष्क्रियप्रतिरोधनाम्ना विश्रुतमहिंसात्मक-सत्याग्रहसदृशं प्रभावपूर्णमान्दोलनमारब्धमनेन। प्राप्त सत्याग्रहप्रयोगस्य प्रथमप्रयासे सफलतां सत्यप्रयोगेषु श्रीगान्धेर्धारणा अत्यर्थं दृढीभूता। अस्मिन्नान्दोलने भारतवर्षात् श्रीगोखले महोदयेन महत्साहाय्यं प्रादायि, स्वयञ्चाप्यागतोऽत्र। एतस्मिन्नवसरे प्रथमवासरमेव मिलितेन स्वर्गीय-दीनबन्धु एण्ड्रूज (Andrews) महाशयेन दक्षिणाफ्रीकीय-सत्याग्रहानन्तरं तद्देशप्रधान-सचिवेन'स्मट्स' महानुभावेन साकं श्रीगान्धेः सन्धिवार्ता कारिता तदनुसारं गान्धिनापि "नेटालीया बोअर" युद्धे जूलूविद्रोहे च ओषधवितरक-मण्डलस्य नेतृत्वं विधाय आहतानां शुश्रूषा सम्पादिता। प्रवासकाल एव अहिंसात्मक-सत्याग्रहस्य प्रयोगं विकासञ्च कुर्वन् सिद्धान्तानप्यस्य स्थिरीकृतवान्।

१९०८ ख्रिष्टाब्दे लिखिते "भारत-स्वराज्य" नाम्नि पुस्तके प्रतिपादितानहिंसा-सत्याग्रहयोः सिद्धान्तानयं साम्प्रतमपि स्वीकरोति।

१९१४ ख्रिष्टाब्दे मातृभूमिं प्रत्यागतेन तेन गुर्जर-प्रान्तस्य खेड़ाप्रदेशे आङ्ग्लेषु स्वप्रत्ययेन तदानींतन-स्वमन्तव्येन च साम्राज्यसाहाय्याय एकस्य स्वयंसेवकदलस्य संघटनं विहितम्। परं प्रथमविश्व-युद्धावसानेऽपूर्णशासन-सुधारयोजना-प्रकाशस्य स्वप्रतिज्ञाप्रतिकूलं दमनकारि-रौलटविधानस्य स्थायित्वकरणानन्तरं पञ्चाम्बुप्रान्ते कृतानामत्याचारणाञ्च विरोधे खिलाफत-सम्बन्धे चारब्धेऽसहयोगान्दोलने १९२२ ख्रिष्टाब्दे राजद्रोहापराधे षड्वर्षावधिकदण्डप्रदानेन कारागारे निपातितोऽयं १९२४ ख्रिष्टाब्दे रुग्णतयोन्मुक्तोऽभवत्। अवसाने चासहयोगान्दोलनस्य साम्राज्यवादिनां षड्यन्त्रैः "विभज्य राज्यकरण" मिति कूटनीत्यनुसारं प्राचुर्येण प्रवृत्तानां साम्प्रदायिकसंघर्षाणां प्रायश्चित्ते एकविंशतिदिवसावधिकोपवासो गृहीतोऽनेन, येन भीतभीतैर्देशवासिभिः पं०मोतीलालस्य सभापतित्वे ऐक्यसम्मेलनं विधायोपद्रवोपाशमाय प्रयत्नाः अकारिषत। दिसम्बरस्य ३१ तारिकायां १९२९ ख्रिष्टाब्दे रजन्यां लवपुरे पूर्णस्वाधीनता-ध्येयमप्युद्घोषितमभूत्। तदैव श्रीगान्धिप्रभावेण 'लार्डइरविन'स्य विनाशाय संयोजितषड्यन्त्रे तद्रक्षणेन तस्मै सहानुभूति-प्रस्तावोऽपि स्वीकृतोऽभवत्

साईमनदलस्य वैफल्यानन्तरं १९३० ख्रिष्टाब्दे पुनरारब्धे लवणसत्याग्रहे यरवदाकारागारे बन्दीकृतोऽप्ययं १९३१ ख्रिष्टाब्दस्य जनवरीमासे लार्ड इरविनेन साकं सन्धिं कृतवान् तदनुसारं लण्डनीय ( गोलमेज ) परिषदि राष्ट्रियमहासभायाः प्रतिनिधिर्भूत्वा भारतीय-समस्या-ग्रन्थि-विमोचनाय विविधान् यत्नान् कुर्वन्नपि साफल्यं नाप। ब्रिटिशराज्येनापि राजनीतिका बन्दिनः परित्यक्ताः। व्यक्तिगत-रूपेण लवणनिर्माणस्याधिकारोऽप्यधिगतोऽभूत्।

१९३२ ख्रिष्टाब्दस्य जनवरी-मासे गोलमेजपरिषत्तः प्रत्यावृत्तोऽयं लार्डविलिङ्गटनेन सह संयुक्त-प्रान्तीय-कृषकसमस्या-विषये वार्तालापं चिकीर्षन्नपि पुनर्धृतो भूत्वा सितम्बरमासे यरवदाकारागारे एव लार्डमैकडानल्डेन-कृतराष्ट्रियता-विरोधि-साम्प्रदायिक-निर्णयानुसारं हिन्दुभ्यो हरिजनानां पृथक्करणस्य विरोधे मरणपर्यंसायिनमुपवासं धृत्वा पूना-पैक्टस्वीकृत्या त

त्यक्तवान् । १९३३ ख्रिष्टाब्दे अहमदाबादीय-सत्याग्रहाश्रमं विहाय वर्धानगरात पञ्चक्रोशदूरस्थिते सेवाग्रामे श्रेष्ठि-जमुनालालस्य भूम्यां स्वपर्णकुटीरं संस्थापितवान् । धारा सभासु गमनस्य देशनायकानां प्रवृत्तिमवलोक्य सत्याग्रहान्दोलनं समाप्य राष्ट्रियमहासभायाः सदस्यतां परित्यज्य यद्यपि महात्मागान्धिरस्पृश्योद्धार-ग्रामसुधार-ग्रामोद्योगसंघादीनामेव कार्येषु पूर्णरूपेण व्याप्तोऽभूत्, परं तथापि यथावसरसम्मतिप्रदानेन पूर्ववद् राष्ट्रियमहासभायाः साहाय्यन्तु विदधात्येव। १९३७ ख्रिष्टाब्दे प्रान्तीय-निर्वाचनान्तरमष्टसु प्रान्तेषु राष्ट्रियमन्त्रिमण्डलानां संस्थापनेन तेभ्यो राष्ट्रनिर्माण-कारिकार्याणां विषये आदेशादिकं प्रादात् ! तदनुसारं तैः स्वप्रान्तेषु खादीप्रोत्साहनं, हरिजनेभ्यः सुविधादानं, ग्रामसुधारः, मादकद्रव्याणां प्रतिषेधः, मौलिकशिक्षापद्धतिश्चेत्यादीनि कार्याणि कृतानि ।

सितम्बरस्य प्रथमतारिकायां १९३९ ख्रिष्टाब्दे यूरोपे शर्मण्य-देशेन प्रवर्त्तिते द्वितीयविश्वमहायुद्धे वाइसरायेण पञ्चमतारिकायां परामर्शाय समामन्त्रितेन महात्मना सम्मेलनानन्तरं यद्यपि स्वसहानुभूतिब्रिटेनफ्रेञ्चाभ्यां सार्कं प्रख्यापिता, परं साम्राज्य-प्रतिनिधिना सह सन्धिवर्तालापाय भारतीयानां साहाय्यप्रदानाय च कतिपयवारं दिल्लीं प्रतिगमनेऽपि नाभूत् कश्चित्परिणामः। अन्ततो गत्वा श्रीगान्धिना कृतेयमभ्यर्थना यद्यतो राष्ट्रिय-महासभा स्वाऽहिंसासिद्धान्ते-दृढतया सङ्ग्रामे सहायतां दातुमनर्हास्ति, अतस्तस्यै स्वातन्त्र्येण स्वमतप्रकाशस्याधिकारो दातव्यः, येन राष्ट्रिया जना युद्धविषये स्वविचारान् प्रकटयन्तु इति वाइसरायेण न स्वीकृतम् । तत्परिणामे श्रीगान्धिना पुनर्युद्धविरोधी वैयक्तिक-सत्याग्रहः समारब्धः, यस्यैतावान् प्रभावस्तु नाभूत तदापि प्रचुरा माननीया नेतारः शासकमण्डलेन बन्दीकृता एव । परं १९४१ ख्रिष्टाब्दे सत्याग्रहोऽयं स्थगितोऽक्रियत । एतस्मिन्नन्तरे श्रीसुभाषचन्द्र आश्चर्यावहपाटवेन विदेशं गत्वा स्वतन्त्रभारतीयसेनां निर्माय श्रीगान्धिसिद्धान्तप्रतिकूलैर्हिंसात्मकोपायैः पूर्णस्वाधीनतां प्राप्तुं प्रचुरप्रयासान् कृतवान् । भारते च क्रिप्स-योजनाऽनङ्गीकरणानन्तरं महात्मनापि चिन्तितम्, यत् "ब्रिटेनस्य नीतिर्भारतवर्षे विभज्य शासनं वर्तते । वर्तमान-साम्प्रदायिकमतभेदोऽपि निजराज्यस्थिरीकरणाय तेनैव जनितः प्रत्युत

सर्वदा वर्धत एव। ब्रिटेने किमपि दलमधिकारारूढं स्याद् नास्ति कस्यचिद्-पीच्छा भारतं स्वतन्त्रं कर्त्तुम्। यावत्पर्यन्तमेते साम्राज्यवादिनो भारते स्थास्यन्ति नैव साम्प्रदायिकसन्धिः सम्भविष्यति"। अतो भारतस्वतन्त्रतायै समाकुलि-तान्तःकरणेनानेन अगस्तस्याष्टमतारिकायां १९४२ ख्रिष्टाब्दे मुम्बईनगर्या-मखिल-भारतीय-कांग्रेससमितेरधिवेशने भारतस्वातन्त्र्यसम्बन्धी 'भारतं त्यजत् ( Quit India)इति प्रस्तावः स्वीकारितः। तेनागामिदिवसे कांग्रेस-कार्यकरिण्याः सदस्यैः साकमयमपि प्रातःकाल एव वाइसरायेण सह वार्तालापं वाञ्छन्नपि कारागारे निपातितः शासकवर्गेण। सर्वा अपि पत्रा-दिकस्य सुविधा आच्छिन्ना अभूवन्। अस्य निग्रहेण समस्तेऽपि भारते विद्रोहः प्रसृतोऽभूत्, यस्मिन् जनताया राज्यस्य च प्रभूता हानिरभवत्। साम्राज्यप्रतिनिधिभिर्भारतीयनेतारो जापानसहकारिणः प्रख्यापिताः। अभूतपूर्वे दमने श्रीगान्धेरुन्मोचनाय राजगोपालाचार्यस्य निशेषाः प्रयत्ना विफलीभूताः। वङ्गप्रदेशेऽन्नाभावेन प्रचुरा जनाः कराल-काल-कवलीभूता अभूवन्। समस्तवृत्तज्ञानाय महात्मनः प्रार्थनापत्राणि सम्राट् प्रतिनिधिना स्वीकृतानि। प्राणत्यागपर्यवसायिव्रतं धारयन्नपि नोन्मुक्तोभूत्। अस्य व्यक्तिगतमन्त्री श्रीमहादेवदेसाई पत्नी च श्री "कस्तूरबाई" नामधेया कारा-यामेव स्वर्गं याता। अन्ततो रुग्णतयोन्मुक्तो महात्मा बहिरागत्य जिन्ना-नाम्ना साकं साम्प्रदायिक-सन्धिवार्ताश्चिकीर्षन्नपि वैफल्यमाप।

वेवल-प्रस्तावसमये सम्मतिदातुः स्थितिं स्वीकृत्य सम्प्रतिदेशे परि-भ्रमन् महात्मा रचनात्मककार्यं करोति। १९४२ ख्रिष्टाब्दे शासकवर्गविहित-प्रखर-दमन-विरोधे जनप्रतिरोधेन सन्तुष्टोऽपि वर्तमानसमये देशस्वा-धीनतायै अहिंसात्मकनीतिमेव श्रेयसीं मन्वानस्तथा चरितुमुपदिशति।

महात्मा स्वराज्यप्राप्तये क्रियमाणमान्दोलनं साफल्येन चालयितुं राष्ट्रियमहासभामेकविचारधारानुयायिनां संस्थां विधातुमिच्छति। अतः सोढुमसमर्थो भवति राष्ट्रियमहासभायां प्रविश्य गान्धिवादविरोधिनीं विचारधारां प्रचारयन्तीतराणि दलानि। प्रजातन्त्रसमर्थकोऽपि राष्ट्रियान्दोल-नस्य सञ्चालनाय अधिनायकतन्त्रमेव समुचितं मन्यते, यतो दृढानुशासनं संघटनञ्च स्थिरं स्यात्।

"वास्तविकं भारतवर्षं नगरापेक्षया ग्रामेष्वेव निवसति, स्वातन्त्र्यस्यावश्यकतापि तेभ्य एवास्ती" ति विज्ञाय ग्रामीणानामावश्यकतां मनोभाव प्रवृत्तिञ्च ज्ञातुं श्री गान्धिरपि निवास-वेष-भोजनादिभिर्ग्रामीण एव संवृत्तः। आतोऽयं सम्यक्तया जानाति कदा जनता किमिच्छति। जनतायाः श्रद्धाभाजनं भूत्वा सर्वदा सत्यप्रयोगान् करोति। विदेशीयसाम्राज्यस्य विनाशमिच्छता तेन स्वदेशीय-साम्राज्यमपि विनाशयितुमेव सवर्णजाति-पददलितानामस्पृश्यानामुद्धाराय 'हरिजनसेवकसंघे'ति नाम्नीसंस्था अपि संस्थापिता। पूर्वमेतस्य कार्यस्य महति विरोधेऽपि सम्प्रति शान्तिर्विद्यते। यन्त्रालयानां प्रचारेण समुत्पन्नानां कार्याभाव-कृत्रिमता-दुराचार-आर्थिक-शोषण-वर्गसंघर्षादीनामपसारणाय ग्रामोद्योगानां प्रसारमीहमानेनानेन "ग्रामोद्योगसङ्घोऽपि" संस्थापितः। इत्थं तर्कुयन्त्र-गृहोद्योग-ग्रामोद्योगादिवैयक्तिकोद्योगानां विकासेन आर्थिकसमस्यायाः सुधाराऽपि कर्त्तुं शक्यते। आङ्गलानां वैभववृद्धिमूलं मुख्यतया वस्त्रवाणिज्यमेवास्ति, एतदर्थमेव तैर्विश्वस्य महान् भूभागः स्वायत्तीकृतः;" अतस्तेषां वाणिज्यविनाशाय महात्मा विदेशीय-वस्तु-बहिष्कारं खादीप्रचारञ्च कुर्वन्नास्ते। संस्कृतिजनने शिक्षाप्रणालीमहत्त्वमवलोक्य वर्तमानशिक्षाप्रणालीञ्च। राष्ट्रियताघातिनीं ज्ञात्वानेन वर्धाशिक्षायोजना आविष्कृता। अयं धर्माद् राजनीतिं पृथग् न मन्यते। अस्य सिद्धान्ता गान्धिवादनाम्ना प्रसिद्धाः सन्ति। गान्धिवादस्य अहिंसा सत्यञ्चेति द्वावेव आधारभूतौ सिद्धान्तौ विद्येते। शान्तिमयसाधनैः, सहयोगेन, सामञ्जस्येन च सर्वासां समस्यानां पूर्त्तिञ्चिकीर्षति। विश्वेषां स्वाधीनतासमर्थकोऽयं वादः सत्ताधारिणां विनाशापेक्षया तान् संरक्षकत्वेन (Trustee) स्वीकरोति। अस्ति च समर्थकस्त्याग-तपस्या-कष्टसहन-ब्रह्मचर्यादिगुणानाम् अतो विशुद्धहिन्दुत्वस्यैव प्रतिकृतिरयं वादो मन्तव्यः।

इत्थं स्वालौकिक-कार्य-कलापैर्महात्म-पदविभूषितो विश्वस्यानन्यसदृशो महापुरुषो भूत्वा राष्ट्रियमहासभायाः केवलं सर्वश्रेष्ठनेता एव नास्ति, अपितु परमोत्कृष्टविचारकः साधकः, आङ्गलादिभाषालेखकः सम्पादकः, ईश्वरभक्तः प्रकृतिचिकित्सकश्चापि विद्यते। अनेन लिखिता 'आत्मकथा' अत्युत्कृष्टरचना मन्यते। हरिजनादिपत्राणां सम्पादनमप्यनेन चिरकाल-

**पर्यन्तमकारि । सर्वे भारतीयाः परमप्रेम्णा 'बापू' पदेन स्मरन्त्येनम् । स्वेच्छानुसारं विंशत्युत्तरशतं वर्षाणि जीवन्नयं स्वव्यापकव्यक्तित्वेन भारतवर्षस्य सेवां कुर्यादित्येव विद्यते नोऽभिलाषः । साम्प्रतं चायं वङ्गीयनवाखलीप्रान्ते साम्प्रदायिक-कलहपीडितानां सहायतायै प्रतिग्रामं भ्रमन्नास्ते ।***

---

* अहो ! गतेषु स्वल्पेष्वेव दिवसेषु किं किं न समविलोकितं स्वप्नेऽप्यचिन्तितमभूतपूर्वं सुदैवेन दुर्दैवेन वा ( अनिर्वचनीयमेतत् ) प्रकल्पितं परिवर्तनं चकितचकितैर्विषण्णचेतोभिरस्माभिः । सप्ततिवर्षपूर्वं सुचिन्त्य न्युप्तं भारतीयेषु विभेदबीजं पल्लवितं पुष्पितं फलितञ्च विधाय गतो मेकलः । समागतस्तत्फलानि समवचेतुं श्रीमौण्टबैटनः आगत्यैव तेन भारतं विभज्य द्वादशशताब्दीतः प्रवृत्ते भारताधः वाताध्वरे पूर्णाहुतिं प्रक्षिप्य भारतेतिहासे निकृष्टं कृष्टतमं पृष्ठमलेखि । हा हन्त ! पश्यतामेवास्माकं हृदयानि विदारंविदारं विकर्तितं स्वतन्त्रतामुपगतं यद्यपि साम्प्रतं समन्ताद् व्रणितं भारतम् । परं लक्षश आर्यवंशीया अबलाबाला युवानो वृद्धाश्च नृशंसै राक्षसैः निहन्यमाना नारकीयकष्टकदम्बं सहमानाः स्वर्लोकमुपयाताः, मानवतामधःकृत्य दानवता भृशं नर्तितुं सम्प्रवृत्ता, सहस्रशः पुनरावर्तितानि लङ्काकाण्डानि दृष्टानि, स्वातन्त्र्यावाप्तिहर्षश्च विषादे परिणतः

हा हा ! हृदयं विदीर्यति, लेखिनी वेपते, जिह्वा सङ्कोचमाद्यते, मनो जडीभवति, नहि च प्रतिपादयितुं पार्यते यदाङ्गलैःपुत्तलिकायितलीगीयः साचिव्येन समन्तात्सन्धुक्षितं वह्निमुपशमितमितस्ततः, कदापि वंगे कदापि मगधे, कदापि देहल्यां द्वारि द्वारि संधावन् उपवासादिपरिक्षीणशरीरो वराको नो 'बापू' ३० जनवर्यां १९४८ तमे ख्रिष्टाब्दे गौडसे हतकेन गुटिकाभिर्निहत्य समाच्छिन्नोऽस्मद्-हस्तेभ्यः । अस्तं गतो भारतभाग्यभानुः । क्व नु खलु अद्यराष्ट्रस्योद्धारकः स्वातन्त्र्यप्रासादनिर्मापकश्च राष्ट्रपिता ?

( लेखकः )

## (१३) आदर्शमहात्मा श्री पं० केशवरामशर्मा प्रभाकरः।

### ( ले० कविभूषणः श्रीनरहरिनाथशास्त्री विद्यालङ्कारः )

[ अस्ति वीरभूमी-पञ्चाम्बुप्रान्तोत्तरदिग्विभागे होश्यारपुर मण्डले 'जेजों' नामातिविश्रुता नगरी, तत्र विद्यते प्रसिद्धतरं पण्डितकुलं सारस्वतब्राह्मणजातीयं प्रभाकरोपाह्वम्। यत्कुल-पूर्वपुरुषेषु 'श्री पं० केशवरामशर्माप्रभाकरः' आदिमो विद्वान् बभूव। यस्येदमादर्शभूतं जीवनचरितं पाठकानामुपायनीक्रियते।

आदर्शमहात्माऽयं स्वकाले देशस्यास्य विद्या-धर्मसंस्कृति-संरक्षणे परमात्मप्रेरित इव परमः सहायकः समसिद्ध्यत्। विशालं चास्य चरितं विविधालौकिकघटना-परिपूर्णं श्रीनरहरिनाथ-शास्त्रिणा कविभूषणेन पद्यैरेवोपनिबद्धं विद्यते। यस्यायं सङ्क्षिप्तांशः समद्धृत्य गद्येन पद्यैश्चोपन्यस्तः, चरितात्मकप्रस्तावशिक्षणाय स्यादयमपि परमोपयोगीति ]

अद्य पञ्चाम्बुप्रान्ते सन्ति शतशः संस्कृतविद्यालयाः, सहस्रशो योग्या-तियोग्या विद्वांसश्चापि। परम् आसीत् सोऽपि समयो यदा वीरप्रसूरार्य-संस्कृतिकेन्द्रभूता पाणिन्यादिमुनिजनयित्री वेदोपवर्णितमाहात्म्याभिः पुण्य-तराभिः सिन्धु-शतद्रु-विपाशैरावती-चन्द्रभागा-वितस्ताद्याभिर्नदीभिः पावित-प्रदेशा ऋषिभूमिरपीयं वैदेशिकदुष्टराजन्यैर्यवनादिभिः क्रियासमभिहारेणा-ऽऽक्रम्यमाणा म्लेच्छभूमिः समापद्यत। सिन्धुनद्यास्तथेतरनदीपञ्चकस्य तटेषु यत्रासन् सहस्रशो महर्षीणां पावनतराणि आश्रमपदानि तत्र म्लेच्छात्याचाराणां नग्नं नृत्यं प्रावर्तत। अत्रत्या मातृभाषा संस्कृतभारती सर्वथा विलुप्ताऽभूत्। जातं साम्राज्यं म्लेच्छभाषाणाम्। विनष्टं सर्वथा-ऽऽर्यसाम्राज्यम्, लुण्टाका अत्याचारिणो यवनाः शासकाः संवृत्ताः, सर्वा-ङ्गीण-संस्कृतव्याकरणनिर्मातुः पाणिनिमुनेर्जन्मभूमिरियं तद्व्याकरणस्य नामापि विस्मृतवती, संस्कृतशिक्षाकेन्द्रभूताः काश्मीरा म्लेच्छप्राया बभूवुः। ब्राह्मणा हलवाहकाः क्षत्रियाः कार्षिका वणिजो वा सञ्जाताः। सदाचारलोपाच्छूद्रप्रायाः प्रजा लुण्ठकभयभीता गिरिकन्दराः समाश्रयन्।

अथ शनैः शनैः आत्मीयात्याचारैरेव क्षीणशक्तय इमे यवनहतका अपि स्वयं व्यशीर्यन्त। पञ्चनदेषु सिक्खभूपतेः पञ्जापकेसरिणः श्रीरणजीतसिंह-महाराजस्य राज्यं प्रावर्तत। समयेऽस्मिन् पञ्जाम्बुप्रान्ते क्वचित् क्वचित् समुपालभ्यत कश्चित्संस्कृतपण्डितः, सोऽपि सामान्यकर्मकाण्डग्रन्थान् शीघ्रबोधादीनेवाध्यापयति स्म, व्याकरणे च केवलं सारस्वतस्य चन्द्रिकाया वा क्वाचित्कं पठनपाठनमभूत्। पाणिनीय-व्याकरणस्य तु क्वचित् कदाचिन्नामैवाश्रूयत। प्रकृतचरितनायकेन श्रीपण्डितकेशवरामशर्मणा प्रभाकरेणैवात्र पुनरभिनवप्रक्रियाक्रमेण संप्राप्त-प्रचुरप्रचारयोग्यताकं पाणिनीयं व्याकरणं प्रचारितं, विलुप्तप्रायो ब्राह्मणोचिताचारश्च सञ्चारितः।

अयं श्रीपण्डितकेशवरामशर्मा प्रभाकरः पञ्जाम्बु-प्रान्तान्तर्वर्ति 'होशियारपुर'—मण्डलान्तर्गत 'जेजों'-नगरनिकटवर्तिनि 'मदूदा'ऽभिधेये ग्रामे चलाकिरामशर्मणः प्रभाकरस्य सदनेऽष्टादश शततमे (१८००) वैक्रमवत्सरे जन्म लब्धवान्। सोऽयं बाल एव प्रकृत्या सरलो वर्णेन गौर आकृत्या चारुः पीनांसो दीर्घबाहुः सुदृढ-विशाल-कायः कमलदल-विशालनेत्रो दर्शकजनमनमोहनः सर्वजनहिताभिलाषी मितभाषी चासीत्।

## अत्र श्लोकाः

आजानुबाहुः शतपत्रनेत्रो विशालभालः सुविशालकायः।
प्रसन्नगम्भीरमुखेन्दुमुद्रो जहार चेतांसि शिशुर्जनानाम्॥ १॥

श्रीकेशवरामस्य पितुः पितृव्यपत्नी 'भाई जीतो' देवी परमात्मनः परमभक्ताऽऽसीत्, सेयं केशवेऽतिवत्सला बभूव।

पितामही तस्य सती क्षमावती पतिव्रता धर्मविवेकपेशला।
अरुन्धतीवानुगता सदा पतिं बभूव वात्सल्यमयी जिताभिधा॥२॥

शशास नित्यं भगवत्कथामृतैर्मनोहरैः पौत्रमतीव वत्सला।
महीयसां भावियशस्विनां सतां भवन्ति सन्तः सहकारिणः पुरा॥३॥

निसर्गतः सौम्यगभीरमुद्रया कथासु संसक्तधिया रमापतेः।
विनीतभावेन च केशवो 'जिता' मरञ्जयत्सज्जनगोचरैर्गुणैः॥४॥

निशम्य तद्वक्त्रविनिर्गताः कथा नरावतारस्य मनोहरा हरेः।
विहाय चाञ्चल्यमहर्निशं शिशु'र्जिता'-सकाशं न जहौ कथंचन ॥५॥
अनेकजन्मार्जितपुण्यबीजतो 'जिता'-वचो वारिनिषेकतस्तथा।
बभूव भक्त्यङ्कुर उत्तमे शिशौ यथेतरः प्रावृषि भूरुहाङ्कुरः ॥६॥
अनेकधा लोकहिताय वालको भविष्यतीत्येव भविष्य-मङ्गलम्।
निरर्गलं सा बुबुधे पुरैव तु पतिव्रतानां किमिहास्ति दुर्गमम् ॥७॥
अथैकदा केशवमङ्कमागतं शिरः समाघ्राय विमृज्य पाणिना।
स्नुतस्तनी नेत्रजलोक्षितं मुदा, 'जिता' यशोदेव सगद्गदाऽवदत्॥८॥
"अये चिरंजीव जगन्ति मोदयन् समुद्धरन् धर्ममनिन्दितैः स्तुतः।
सदा सदाचारधुरं समुद्वहन् गवां पुनः पाहि भृशाकुलं कुलम् ॥९॥
समस्तविद्यास्तवकण्ठरङ्गभू-विलासिनी-लास्यकलासु कौशलम्।
भजन्तु वंशं च भजन्तु सन्ततं कृतादरा भक्तिसखीसमन्विताः ॥१०॥
त्वदीयशिष्या हरितां तमस्ततिं हरन्तु वैदुष्य-गुणैर्भुवि-श्रुताः।
शरन्निशा-शीतमयूखमालिनो निजा मयूखा इव कौमुदीसखाः" ॥११॥
तदाशिषा तस्य विवेकलोचनं समुन्मिमीलाशु यथोषसाम्बुजम्।
ततस्तदीयामवलम्ब्य सम्मतिं चचाल विद्यामधिगन्तुमञ्जसा ॥१२॥

माई 'जीतो'-देव्या एवादेशेन तदीय-जामातुः 'मद्वाणी' ग्राम-वास्तव्यस्य महामहिमशालिनो वैष्णवमहात्मनः श्री पं० मथुरादासशर्मणः प्राथमिकीं शिक्षां दीक्षां च प्राप्तवान् श्रीकेशवरामः।

पुरैव यः केशवमानसेऽङ्कुरः समुद्बभौ स्वच्छ "जिता"-वचोऽमृतैः।
स चाधुना तस्य गुरोः कुले सतो गुरोः प्रसादादतिवृद्धिमाययौ ॥१३॥
दिने दिने भक्तिरसाप्लुताः कथाः श्रुताः श्रुतेनैव समं समादरात्।
तमङ्कुरं ज्ञानसखं लघीयसा त्वनेहसा पुष्टिमुपानयन्नहो ॥१४॥
शुभाशिषः पूर्व"जितो"दिताः पुनर्गुरोर्गिरा केशवकर्णमागताः।
निराकुलं भाविशुभावलोकिनां सतां गिरो नैव विसंवदन्ति हि ॥१५॥
विचारयामास गुरुः सचेतसा यदेव तत्केशव-चित्तसम्मतम्।
विहाय गेहं प्रियबान्धवाँस्तथा जगाम काशीं पठनातिवाञ्छया ॥१६॥
समग्रविद्या-सरितां पयोनिधेर्मनीषिवर्याद् भवदेवमिश्रतः।

समस्तविद्याः सकलं कलाकुलं स केशवः सान्दिपनेरिवाध्यगात् ॥१७॥
सतीर्थ्यतां केशवरामशर्मणो दधार वैयाकरणेषु केसरी।
सरत्न-शब्देन्दुमुखेषु टीकिता भवात्मजो भैरवमिश्रपण्डितः ॥१८॥
गुरोः सपर्यासु निमग्नचेतसा हरौ च रत्या निगमेषु मेधया।
गुणैरशेषैरधिकं स केशवः प्रसादयामास गुरुं दिने दिने ॥ १९ ॥
परास्थया भागवतीं कथानदीं शिवां सिषेवे सह जन्हुकन्यया।
अनेन नित्यं विधिना स केशवश्चकार विद्याधिगमं गुरोः कुले ॥ २० ॥
क्षणे क्षणे रामपदारविन्दयोर्नवा नवा भक्तिरनन्यगामिनी।
ललास सा केशवमानसेऽमले सरोवरे हंसवधूरिवामला ॥ २१ ॥
निमन्थनाद् भागवतामृतोदधेः सुधोपमा भक्तिरुदागता हरेः।
गुरोः कृतिः सा गुरुणैव साधिता पपौ पुनस्तां किल केशवो बुधः॥ २२ ॥
समस्तशास्त्रेषु जगाम कौशलं समापमानं विदुषां सदस्सु च।
न केवलं पण्डितमण्डलीष्वसौ कनिष्ठिकास्थानमगाच्च सात्त्वताम् ॥२३॥
विशालकीर्ति-र्विदुषामथाग्रणी-र्विरज्य लोकाद्धरिसेवनेच्छया।
इयेष काश्यामतिरिक्तजीवितं विनेतुमध्युष्य गुरोः पदाब्जयोः ॥ २४ ॥
यदेव देवस्य समीहितं हितं तदेव जीवस्य भवे भवेद् ध्रुवम्।
समुन्नतिः पञ्चनदस्य नीवृतः समीहिता दैवविधेर्हि केशवात् ॥ २५ ॥
हरीच्छया तस्य कलेवरे वरे स्फुलिङ्गिनी कापि रुगाविशत्तदा।
अनन्यभावेन गुरोः सपर्यया विहाय काश्यां वसतस्तपस्विनः ॥ २६ ॥
महौषधिस्तत्र गता यशस्वितां न सा प्रणीता भिषजां वरैरपि।
निदानमुत्सृज्य मनीषिणामपि भवाधिरभ्येति न शान्तिमन्यथा ॥ २७ ॥
दयामयी व्याजविहीनवत्सला गुरोः सती गौरिव रुग्णतर्णका।
जगाद सा केशवमेकदा नतं तदीयरोगेण तु दुःखिता सती ॥ २८ ॥
सुखं चिरं जीव नु वत्स ! कथ्यतां त्वया कृतो वापि वधूपरिग्रहः।
निशम्य तन्मातृवचः कृताञ्जलिर्नताननो नम्रतरं वचोऽब्रवीत् ॥ २९ ॥
अनिच्छतोऽप्यम्ब ! समस्तबान्धवैः प्रथानुसारं विवशीकृतस्य मे।
कुमारभावेऽपि कुमारिकाकरग्रहोऽभवत्ताञ्च विहाय निर्गतः ॥ ३० ॥
स्नुषा-वियोगेन च पीड़िता सती सती-वियोगस्य रहस्य-वेदिनी।

तदैव गत्वा भवदेव-सन्निधौ निवेदयामास रहस्यवद्वचः ॥ ३१ ॥
अवैम्यहं प्राणपतेऽस्य रोगिणो रुजो निदानं परिणीतवानयम् ।
पतिव्रतायाश्च वियोगवह्निना विदह्यतेऽमुष्य ध्रुवं कलेवरम् ॥ ३२ ॥
विसृज्यतामाशु गृहान् गतो ध्रुवं तया समं शान्तिमयं समेष्यति ।
विभिन्नरोगेषु विभिन्नमौषधं विनिर्मितं सर्गनिसर्गशिल्पिना ॥ ३३ ॥
उपायभावाच्च तदीयशान्तये स्वतो वियोगाच्च सुशिष्यशालिनः ।
तदेव कालोचितभाषितं तया भवाय भाति स्म शुभाऽशुभं वचः ॥३४॥
अनिच्छयाप्यस्य विसर्जने भवश्चकार बुद्धिं विधिपारवश्यतः ।
यथा पिता दाशरथिं विनेच्छया विवासयामास समाश्चतुर्दश ॥ ३५ ॥
उदश्रु नेत्रं पुलकाञ्चितं वपुः सगद्गदां वाचमधीर-मानसम् ।
उवाच बिभ्रच्छिथिलेन पाणिना शिरः परामृश्य सुधीरिमा गिरः ॥ ३६ ॥
चिराय वत्स ! प्रतिपन्नभक्तिना त्वया सपर्या मम सा कृता यया ।
ऋणी तवास्म्येष यथा हरेर्हरिर्न विद्ययाऽऽनृण्यमहं तु यापितः ॥ ३७ ॥
अथार्थये वत्स ! जनार्तिभञ्जनो जनार्दनो मङ्गलमन्दिरं हरिः ।
हरत्वघं सौम्य करोतु मङ्गलं फलन्तु विद्यास्तव कल्पवृक्षवत् ॥ ३८ ॥
प्रियोऽसि पुत्रादपि नौ गुणैः शुभैः कथं नु याहीति वदामि निष्ठुरः ।
तथापि हे पुत्र ! तथा विधीयतां यथा न सा निश्शरणा विपद्यते ॥ ३९ ॥
त्वया प्रभुः पञ्चनदेषु साम्प्रतं विलुप्तमाचारमविद्यया पुनः ।
स्ववेदविद्यां च समुद्धरिष्यति निमित्तमात्रेण यशोऽधिगम्यताम् ॥ ४० ॥
भवन्तु ते वंशधराः श्रुतेर्धराः क्षमाधराः केशवभक्ति-तत्पराः ।
तनोतु विद्यामनिशं महीतले यशस्विनी शिष्य-परम्परा तव ॥ ४१ ॥

आशीः परम्परामुक्त्वा विससर्ज स तं गुरुः ।
स चापि विवशीभूतो गमनाय मनो दधे ॥ ४२ ॥

निमज्ज्य गङ्गाम्बुनि पूतविग्रहः प्रणम्य विश्वेशपदाम्बुजद्वये ।
प्रभाकरो द्वादशशिष्यसंयुतश्चचाल काश्या उदयाचलादिव ॥ ४३ ॥

बन्धून स्वान् मोदयन् धीरो गेहं स्वं स समागतः ।
मुदिता बान्धवाः सर्वे स्वागतं तस्य चक्रिरे ॥ ४४ ॥

परस्परं दर्शनमात्रतस्तयोर्व्याधिस्तथाधिश्च समं शमं गतौ ।

वियोगिनोर्योगसमं महौषधं न चन्दनं नापि सुधा कुतः परम् ॥ ४५ ॥

अथैवमनिच्छन्नपि षड्विंशतिवर्षानन्तरं श्रीगुरुचरणाऽनुरोधेन स्वदेशं समागतोऽनवद्य-विद्याविद्योतित-स्वान्तः भक्तिसमाराधित-कमलाकान्तः परमशान्तः सदाचारप्रचारपरायणः परमभागवतो महात्मा पं० श्रीकेशवरामशर्मा प्रभाकरो लघुतरे निजग्रामे एव विद्यादानमहाध्वरं समारेभे। देशदेशान्तरेभ्यश्चाऽध्ययनाय समाजग्मुर्विद्यार्थिनः। गृहीयपाठशालायाश्च तस्याः शनैः शनैः प्रवर्धमाना विद्यार्थिसङ्ख्या नवतिमस्पृशत्। तपस्विनस्तस्य महात्मनोऽकिञ्चनस्य समस्तोऽपि विद्यार्थि-भोजननिवासादि-योगक्षेमोऽकिञ्चनजनप्रियस्य श्रीभगवतो विश्वम्भरस्य कृपयैव समसिद्ध्यत्।

गृहीयपाठशालायामस्यां प्राप्तशिक्षा विद्यार्थिनो विश्वविख्याता राजाधिराजवन्दितचरणा महाविद्वांसो महापुरुषा अभूवन्। सर्वे सफलपरिश्रमा लब्धकीर्तयः सदाचारप्रचारपरायणाः संप्राप्त-विद्याधिगम-वास्तविकलाभाः परिसंशुद्धान्तःकरण-साक्षात्कृतपरमतत्वाः समधिगतमहत्त्वा बभूवुः। अत्राधीतः कश्चिदपि विफलश्रमो नाभूत्। विद्यासाफल्याय तदानीं प्रसिद्धतरेयमासीत्पाठशाला। प्रसिद्धिं गतश्चासीदयमाभाणकस्तदा—"अत्र पठिता विद्याऽवश्यं सफला भवती"ति। अत एव केचित्तु विद्या-साफल्यलाभायैव केवलं किञ्चित्कालमत्रावश्यम् अधीयते स्म। प्राप्तकैवल्यानां महामहिम्नां श्रद्धेयचरणानां काशीस्थानां १०००८ विशुद्धानन्दसरस्वतीनां परमश्रद्धेयपादा गुरवः श्री १०००८ गौड़स्वामिमहाभागाः (येषां पूर्वाश्रमनाम "भगवान्दास" इति। जन्मभूमिश्च पटियालाराज्यान्तर्गतं 'सनौर' नगरम्) यौवनारम्भे श्रीकेशवरामशर्मणां सकाशे मदूद्ग्रामेऽध्ययनं कृतवन्तः (एतच्च काश्यां लहरी-प्रैस-मुद्रिताद् विशुद्धचरितावलीग्रन्थात्समवगच्छामः) एतेनैव सम्बन्धेनैकदा पञ्चाशता पण्डितैः सह 'कांगड़ा' प्रान्तवर्तिनी सुकेतराजधानीं समागताः स्वामिपादाः श्रीविशुद्धानन्दसरस्वतीमहाभागास्ततः परावर्तमाना जेजों-मदूदमार्गेण समाजग्मुः। जेजों नगरे च पं० केशवरामशर्मणां प्रपौत्रं श्री पं० धूर्जटिशर्माणं श्री पं० रामनारायणशर्माणं च वीक्ष्य प्रमोदमापन्नाः संन्यासधर्मौचित्येन शुभाशीर्वादैः सम्भावयाम्बभूवुः।

समये तस्मिन् वाराणस्यां विख्याताः परमोदारचरिता जम्बू (कश्मीर) प्रदेशीया महाविद्वांसः श्री पं० काकारामशर्माणः, मूलत्राण-प्रदेशीया वैयाकरणधुरन्धराः श्री पं० विभवरामशर्माणश्चापि प्रथमतः श्री पं० केशवरामशर्मणामन्तेवासित्वमभजन्। पञ्चाम्बुदेशे चापि श्रीकेशवरामशर्मणां शिष्या योग्ययोग्या विद्वांसः समभूवन्—यथा पटियालाराज्यान्तर्गत-'चमारू'-ग्रामवास्तव्याः श्री पं० हरयशरायशर्माणः पटियालाराज्यपण्डिताः, तद्देशीया एव च श्रीमन्तः श्रीवरागारामशर्माणः पटियालाराजपण्डिताः, जम्बू ( कश्मीर ) राजधानीराजपण्डिताः श्री पं० गोकुलचन्द्रशर्माणः, 'होश्यारपुर' नगरनिवासिनः श्री पं० व्रजलालशर्माणः ( श्री पं० कन्हैयालालशर्मणां तातपादाः ), 'फगवाड़ा' नगरवास्तव्याः श्री पं० गोविन्दरामशर्माणः, तथा वृत्तिप्रभाकरविचारसागरादिभाषावेदान्तग्रन्थलेखकाः श्रीनिश्चलदासमहात्मानोऽपि श्री पं० केशवरामशर्मणामेव सकाशात्प्रथमं पठितवन्तः ( इदमपि विशुद्धचरितावलीतोऽवगम्यते )।

किञ्च लखतगढ़निवासिचन्दनकुलभूषण-श्री पं० सीतारामशर्माणः, अम्बालानगरनिवासि-पं० जवाहररामशर्माणः, काठगढ़निवासि श्रीगोविन्दरामशर्माणः, श्री पं० गुलजारियारामप्रभृतयश्च, काशीस्थाः श्री पं० अनन्तरामशर्माणः, अमृतसरस्थ-श्री-पं० हरिदत्तशर्मत्रिवेदिनां मातामहाः श्रीगिरधारीलालशर्माणः, होश्यारपुरस्थ-श्री पं० कन्हैयालालशर्मप्रभृतयश्चेति प्रशिष्येषु चापि योग्यतमा विद्वांसोऽभूवन्! किम्बहुना श्री पं० केशवरामशर्मणः शिष्यप्रशिष्यपरिगणने तु सम्पूर्णमपि भारतं तद्व्याप्तमेवोपलभ्येत। उक्तं च स्वरचितवृत्तरत्नाकरटीकायामन्ते श्री—पं० रामप्रपन्नशास्त्रिभिः—

श्री जेजों मधुदा—पुरीय—विबुधः श्रीकेशवोऽभूदिदम्।
यच्छिष्यादि—परम्परावृत—महीचक्रं सुविद्यागृहम्॥

तात्कालिका राजानो महाराजाश्च परमतपस्विनो महाविदुषोऽस्य श्री पं० केशवरामशर्मणो दर्शनाय सर्वदा महीयसीमुत्कण्ठामधार्षुः। सेवासम्पादनावसरलाभे च परमं स्वकीयं सौभाग्यं मन्यते स्म। पञ्चाम्बुकेसरी महाराजः श्रीरणजीतसिंहो भूयसीं भूमिं निष्करीकृत्याऽनिच्छतेऽपि पंडित-

वर्यायाऽस्मै सबहुमानमार्पयत्। यस्याश्च कश्चिदंशोऽद्यापि तद्वंश्यानां स्थायिसम्पत्तिरूपो विद्यते। तदानींतनाः सिक्खराज्यनेतारः श्रीसरदारदेवा-सिंहमिश्ररूपलालप्रभृतयोऽस्य पण्डितप्रवरस्याऽऽदर्शमहात्मनो यथासमयं सत्सङ्गेनात्मानं पावनमकार्षुः। एवं निष्कामविद्यादानमहाध्वरप्रवृत्तस्य महातपस्विनः सुरभारतीप्रचारपरायणस्य परमभागवतस्यास्य समस्तमपि जीवनं सदाचारशिक्षणे आर्यसंस्कृति-संरक्षणे तत्साधनीभूतसंस्कृतविद्या-ऽध्यापने एव च व्यत्यैषीत्। चरमे च वयसि श्रीभगवद्भजनं भगवद्गीता श्रीमद्भागवतादि-सद्ग्रंथस्वाध्यायो भगवद्ध्यानमेव च कर्तव्यतयाऽवा-शिष्यत्, किञ्चित्कालमेवोच्चश्रेणिस्थान् छात्रान् अध्यापिपत्। अथ नवति-वर्षपरिमिते वयसि नवत्युत्तराष्टादश शततमे ( १८९० ) वैक्रमवत्सरे मानव-लीलां समाप्य परलोकमशिश्रियत् श्री पं० केशवरामशर्मा प्रभाकरः।

वंशे चाप्यस्य योग्ययोग्या आदर्शमहात्मानः संस्कृतविद्वांस एव समजनिषत। पं० केशवरामशर्मणः पुत्रः श्री पं० रघुनाथशर्मा योग्यो विद्वा-नासीत्। पौत्रश्च श्री पं० मुकुन्दलालशर्मा धुरन्धरो विद्वान् परमविश्रुतो महात्मा भगवद्भक्तो बभूव। अन्त्ये वयसि सर्वथा मौनव्रतमास्थाय विद्वत्-संन्यासेन शेषं जीवनं व्यतियापयन् भगवन्तमेव भेजे। (पं० श्रीमुकुन्दलालत एव पण्डितकुलमेतद् मदूद ग्रामं विहाय जेजों-नगरं निवासभुवं चकार ) श्री पं० मुकुन्दलालपुत्राश्च श्री पं० रामचन्द्र-धूर्जटि-रामनारायणशर्माणोऽपि योग्या विद्वांसः सुरभारतीयसेवापरायणाश्चाभूवन्, परम्परागतां च तां गृहीयपाठशालां समचालयन्। ( सा चेयं साम्प्रतमपि "श्रीकेशवसंस्कृत-पाठशाला" नाम्ना कुलेऽस्मिन् पूर्ववद् विद्यादानं विदधती विराजते )

अनन्तरं केशवेऽस्मिन् कुले श्री पं० परमानन्दशर्मा धर्मशास्त्री कर्मकाण्डप्रकाण्डं, श्री पं० रामप्रपन्नशास्त्री काव्य-व्याकरण-दर्शनतीर्थः, वेदान्तसार्वभौमस्तार्किकचक्रचूडामणिरादर्शमहात्मा श्री पं० नीलकण्ठ-शास्त्री, श्री पं० उपेन्द्रनाथशास्त्री वैयाकरणभूषणो दर्शनालङ्कारः, श्री-मत्पं० अमरनाथ—परशुराम—विश्वमित्र—जयगोपालवैद्यपञ्चानन—प्रभृ-तयश्च योग्या विद्वांसोऽभूवन्।

साम्प्रतं चापीदं कुलीनाः परम्परागतपाण्डित्य—संरक्षकाः सुयोग्या

विद्वांसःसन्ति—व्याकरणाचार्य-श्री-पं० युगलकिशोरशास्त्री, श्री पं० विश्वनाथशास्त्री प्रभाकरः, श्री पं० नीलाम्बरशास्त्री विद्यालङ्कारः। श्री पं० मुरलीधरः, आयुर्वेदाचार्य श्री पं० देवरत्न—श्री पं० हरिमोहन—श्री पं० हरिमित्रशर्मशास्त्रिप्रभृतयश्च। परमप्रसिद्धमिदं कैशवं पण्डितकुलंसाम्प्रतं (आसन्ननवतिवर्षेभ्यः) जेजों नगरमध्यास्ते।

एवम्—आदर्शतपस्विनो महाविदुषोऽस्य श्री-पं० केशवरामशर्मण उभयविधोऽपि वंशो भगवत्कृपया सुरसरस्वतीसेवासम्पादकः समाचार-पालनैकव्रतः, आर्यसंस्कृतसंरक्षैकमहाव्रती देशस्य सुरभारती-संरक्षक-समाजस्य सनातनधर्मस्य च संरक्षणे परमो वास्तविकः सहायकः सम-सिद्ध्यत्।

अन्ते च साञ्जलिबन्धं नम्रेण शिरसा भक्तिप्रवणेन चेतसा प्रेमगद्-गदया च वाचा प्रार्थयामो भगवन्तं श्रीसच्चिदानन्दघनं परमात्मानं यत् परतोऽपि सर्वत्र ब्राह्मणकुलेषु समुत्पद्यन्ताम् एवं भूतास्तपस्विनो विद्वांसः येन सुरसरस्वती सदा परमोन्नता परमादरणीया च प्रचुरप्रचारमापन्ना भारतवर्षीयं गौरवं सर्वदा वर्धयेदेव। श्रीकालीदासीयैश्च शब्दैरभिलषामः—

"सरस्वती श्रुतिमहती महीयताम्।" इति



# अथ विवेचनात्मकाः प्रस्तावाः ।

## (१४) धर्मं चर

[ अद्य धर्मनाम्नोऽपि उद्विजते लोकः, नेदं जानाति— "धर्मेणैव वास्तविकं विश्वजनीनं सर्वतोभद्रं जायते कल्याण"-मिति । धर्म एव मानवता मानवतैव धर्मः । धर्महीनो मानवो दानवः, धर्म एव एकमात्रमाचरणीयं पुंसः । तेनैव भवति सकलपुरुषार्थसिद्धिः । वैयक्तिकं सामाजिकं च कल्याणं धर्माचरणे एवेत्यादिकं सर्वमपि पठ्यतां प्रस्तावेऽस्मिन् सरलातिसरलपरिपाट्या प्रतिपादितम्, समीक्षा च प्रचलितानां वर्तमानधारणानाम् । ]

कीट-पतङ्ग-पशु-पक्ष्यादियोनीर्लक्षशोऽतिक्रम्य मानवं जन्म लभते जन्तुः । अत्रायं प्राप्नोति स्वतन्त्रता-प्राप्त्यवसरम् , स्वस्वरूप-भूतं परमानन्दं चाधिगन्तुम । देवादियोनयोऽपि भोगयोनय एवेति दिव्यभोगासक्तमनस्कतया नास्ति तत्रापि परमकल्याणाय प्रयत्नमाचरितुं जन्तोरवसरः । मानवजन्मैवास्ति सर्वोत्तमोऽवसरो यत्र समस्तमपि कल्याणम्-अभ्युदयं निःश्रेयसं वा साधयितुं शक्यते, मानवो हि कर्मणि स्वतन्त्रः शुभमशुभं वा यथेच्छं कर्तुं पारयति । मानव एव च विधिनिषेधगोचरः सर्वाणि शास्त्राणि मानवमेव शासति "इदं कुरु" "इदं च मा कार्षीः" इति । तत्रायं साधु कृत्वाऽभ्युदयं निःश्रेयसं वाधिगन्तुं क्षमते, अन्यथा कृत्वा च नीचान्नीचतरं जडभावमपि प्रयाति । सर्वशास्त्रेषु च मूलभूतं मूर्धन्यतमं वेदः, स एव विस्तरेण मानव-कर्तव्यम्-आचरणीयं सर्वतो भावेन शिक्षयति । अत एव च ब्रह्मचर्याश्रमे चतुर्विंशतिवर्षाणि यावद् ब्रह्मचर्यव्रतपालनपुरःसरं पुरा नियमेनाधीयते स्म वेदः, येन मानवोऽयं कर्तव्यमाचरीणीयं वाऽऽत्मनः सर्वतोभावेनाधिगच्छेत् । अनेकैः प्रकारैर्विविधैश्च विधिभिः सर्वं शिक्षयित्वाऽन्ते आचार्यकुलात्प्रतिनिवर्तमानं ब्रह्मचारिणं प्रति सङ्क्षिप्य सर्वसार-

भूतोऽयमाचरणीयोपदेश आचार्यस्य, यथा—"वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—"धर्मं चर" इति।

अनुशासनमिदं धर्ममेव मानवमात्रस्य कृते एकमात्रमाचरणीयं प्रतिपादयति, सिद्धं चैतत् पुरुषार्थचतुष्टये धर्मार्थकाममोक्षाख्ये सर्वप्रथमो धर्मः चरमश्च मोक्षः,। मोक्षो हि नाम मानवजीवनस्य परमं लक्ष्यं ध्येयं प्रापणीयं वा, अयमेव पर्यायान्तरैः परमानन्द ईश्वरप्राप्तिरात्मपदलाभश्चेति व्यवह्रियते। तस्यैतस्य परमपुरुषार्थस्य मानवजीवनचरमलक्ष्यस्य मोक्षस्यैकमात्रं साधनं धर्म एव। अर्थकामौ हि सर्वप्राणिसाधारणौ मध्यमौ पुरुषार्थौ, धर्मानुकूल्येन साधितौ च तौ न भवतः प्रतिकूलौ परमपुरुषार्थ-साधने, भवतश्च प्रत्युताऽनुकूलावेव। परमपुरुषार्थं मोक्षमधिगतवतो नावशिष्यते पुनः प्रापणीयं किञ्चित्, तत्साधनतया धर्ममाचरतश्च नास्ति किमप्यन्यदाचरणीयम्, यदवशिष्येत। शब्दान्तरेषु—मोक्षमवाप्य "नानवाप्तमवाप्तव्यम्" धर्मं च कृत्वा "कर्तव्यं नावशिष्यते"।

साम्प्रतं च विचारणीयं कोऽयं धर्मो नामेति—"ध्रियतेऽनेन, धरति असौ" वेति धर्मपदनिर्वचनम्। "धारणाद्धर्ममित्याहुः" इति शास्त्रवचनं च। येन मानवो ध्रियते यो मानवं धरति स "धर्म" इति। अर्थाद् येन मानवो मानवोऽस्ति स धर्मः, धर्म एव मानवता, मानवतैव च धर्मः। यदि मानवे मानवतैव नास्ति, तदा नास्ति स मानवः, धर्महीनो हि मानवः पशुर्मन्यते एव। आहारनिन्द्रादयस्तु भावाः पशौ मानवे च समानाः। अस्ति खलु कश्चिद् विशिष्टो भावः यो हि मानवं पशोर्विशिनष्टि। सोऽयं धर्म एव, यस्य चेदं लक्षणं सार्वतोभद्रं सार्वभौमं च मान्येन मुनिना कणादेन वैशेषिकदर्शने समुद्घोषि— "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" इति। येनाचरणेन अभ्युदयः=लौकिकपारलौकिक-सुखसमृद्धिलाभः; निःश्रेयसं=परमानन्दपदलाभश्च भवतीति स धर्म इति लक्षणसूत्रार्थः। अथ किं तत्कर्म आचरणं वा यद् अभ्युदयनिःश्रेयसयोः करणीभूतं स्यादितिचेत्—श्रुतिस्मृति—सदाचारात्मसन्तुष्टिप्राप्तमेव कर्म आचरणं वा तथेति गृहाण। उक्तं च धर्मे प्रमाणमुद्घोषयता धर्मशास्त्रेण—

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥"

तत्र धर्मे मुख्यं प्रमाणं वेद एव, वेदार्थमेव विशकलयन्ती स्मृतिः, तदुभयसमर्थितश्चाचारः तदनुकूलैव चात्मसन्तुष्टिर्धर्मे प्रमाणम्। तथा चोक्तम्—"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः"। तत एव च वेद-विहितोऽर्थो धर्म इति धर्मलक्षणं करोति मीमांसाशास्त्रम्। स चायं धर्मो दशाङ्गः सङ्गृह्य प्रादर्शि मनुस्मृतौ—

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥"

दशाङ्गोऽयं धर्मो विश्वजनीनः सार्वभौमश्च। आर्यो वाऽनार्यो वा भारतीयो यूरोपीयो वा गौराङ्गः कृष्णाङ्गो वा यवनो वा यहूदी वा जयपानीयः चीनीयो वा रूसीयोऽफ्रीकीयो वा मानव-शब्दभाक् प्राणी एतेन दशांगेन धर्मेण यदि सम्पन्नस्तदा भवितुमर्हति स मानवः, नोचेन्न मानव इति शक्यते वक्तुम्। एषैव खलु मानवता, या तत्तत्सम्प्रदायाचार्यैर्यत्किञ्चिदन्तरेण पर्यायान्तरैः स्वस्वनियमेषु धर्मत्वेन प्रतिपादिता। आर्य-शास्त्रेषु च समासव्यासाभ्यां क्वचिद् यम-नियमरूपेण, अन्यत्र सामान्यधर्मनाम्ना, अपरत्र सनातनधर्माभिधानेन वा प्रपञ्चिता। विचार्यतां च स्वयम्—धृति-क्षमाऽस्तेय-सत्य-शौचेन्द्रियनिग्रह-विद्यादिभिर्धर्मलक्षणैर्हीनोऽपि कश्चित्किं मानवो भवितुमर्हति? पर्यायान्तरे पशुरेव सः। अत एव च धर्मलक्षणैरेतैर्हीनाः प्राणिनो मानवाकृतयोऽपि राक्षसा दानवा वा उच्यन्ते। सिद्धमिदं धर्म एव मानवता मानवतैव च धर्म इति। इत्येतत्सामान्यधर्मेभ्योऽतिरिक्ता विशेषधर्माणामस्ति समाजसङ्घटनाय विशिष्टा सृष्टिः। यत्रान्तर्भवन्ति खलु वर्णधर्माः आश्रमधर्माश्चेत्यादयः। मानवो हि सामाजिकः प्राणी, समाजाश्रितं च तस्य जीवनम्। समाजश्च बुद्धिबलम्; बाहुबलम्; आर्थिकबलम्; शिल्पकलादिबलं चाधारीकृत्य भवति साधु सङ्घटितः, अतस्तदावश्यकतां पूरयति चातुर्वर्ण्यम्, बुद्धिबलप्रधानो ब्राह्मणः, बाहुबलप्रधानः क्षत्रियः, आर्थिकबलप्रधानो वैश्यः, शिल्पकलादिप्रधानः शूद्रः। तेषामेतेषां चतुर्णामपि वर्णानां समष्टिः सुसङ्घटितो मानवसमाज एव विराट्-पुरुषत्वेन समुपवर्ण्यते वेदैः—

"ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽअजायत"।

वर्णानामेतेषां धर्मा अपि स्व-स्वभावानुसारं शास्त्रैरुपदिष्टाः, वृत्तयश्च पृथगेवोपकल्पिताः वेदानां रक्षणं ब्राह्मणस्य मुख्यो धर्मः, तेन मानवसमाजस्याऽऽध्यात्मिकी रक्षा मुख्यं ब्राह्मणकर्तव्यम्, तदनुकूला वृत्तिश्च ब्राह्मणस्य अध्यापन–याजनादिरूपा। प्रजारक्षणं क्षत्रियस्य मुख्यो धर्मः, तेन बाह्यव्यापत्तिर्निवार्यते समाजस्य, तदनुकूला वृत्तिस्तस्य करादानादिरूपा। भोजनादि-जीवनीय-वस्तुसंरक्षणम्; तत्संविभागश्च वैश्यस्य धर्मः, तदनुकूला कृषिगौरक्ष्य-वाणिज्यादिरूपा वृत्तिर्वैश्यस्येति आर्थिकीं समस्यां समाजस्य पूरयति वैश्यवर्गः। नित्योपयोगि-घट-पट-कटादिसामग्रीजातसम्पादन-द्वारा सर्वेषामपि सेवासम्पादनं शूद्रधर्मः तदनुकूलैव च शिल्पक्रियादिरूपा शूद्रस्य वृत्तिः। सेयं समाजव्यवस्थैव वर्णव्यवस्था, वैज्ञानिकी व्यवहारोपयोगिनी वेदादिसर्वशास्त्रप्रतिपादिता विश्वजनीना विश्वशान्तिहेतुभूता सर्व-कल्याणकारिणी च, यस्या भङ्गेन साम्प्रतं मानवसमाजो विशृङ्खलो विशीर्णश्च सञ्जातोऽस्ति, अस्याः सद्भावे च नोद्भवति विकार्यता-(बेकारी)-प्रश्नो वृत्ति-कार्श्यसमास्य वा कल्प्यताम्—संसारे विद्यमानः समस्तोऽपि मानवसमाजः चतुर्धा वर्णेषु विभक्तः स्यात्, स्व-स्वधर्मे च पूर्णतया तत्परो भवेत् कः कं तदा किमिति पीडयेत्, सर्वाः समस्याः स्वयमेव समाहिता भवेयुः। एवं मानवीय-वैयक्तिकजीवनस्यापि समाजस्येव चत्वार एव कृता विभागाः,—ब्रह्मचर्यं गार्हस्थ्यं वानप्रस्थ्यं संन्यासश्चेति यैरेतैः परिपूर्णतां लभमाना मानवताऽन्ते परमपुरुषार्थं मोक्षमधिगच्छन्ती सम्पद्यते सफला। तत्र वीर्य-विज्ञान-शौर्यादिलाभाय ब्रह्मचर्यम्, नैतिकजीवन-समाजसम्पर्क-मर्यादितजागतिक-सुखभोगाप्तये गार्हस्थ्यम्, गृहं परित्यज्याध्यात्मिकोन्नत्यै अत्युच्च-समाजसेवारूप-दैवसम्पत्सम्पादनार्थं च जप-तप-ईश्वरभजनादि-पुरःसरं परमपुरुषार्थ-पथाग्रेसरणाय वानप्रस्थाश्रमः, समग्र-सांसारिकसुखेभ्यो विरज्य परमपुरुषार्थभूत-परमानन्दप्राप्तये संन्यासः, ते एते प्रत्येकं चत्वारोऽपि वर्णाश्रमधर्मा वैयक्तिकरूपे मानवतां परिपूर्य समष्टिरूपे समाजं च परिपोष्य मानव-जीवन-चरमलक्ष्यं मोक्षमधिगमयन्ति। एवं चायं सामान्यविशे-

षादिभेदप्रभेदैरनेकतां गत एको धर्म एव समस्त-कल्याण-साधनाय सर्वतो भावेन मानवैराचरणीय इति निश्चितं भवति ।

वस्तुतो धर्म एव वैयक्तिकं सामाजिकं लौकिकं पारलौकिकं वा कल्याणं साधयितुं क्षमते । धर्माचरणेनैव शुद्धं जायतेऽन्तःकरणम् । येन पुरुषो देवो भूत्वा देवान् यष्टुमधिकारी भवति । देवोपासनया च विविधानि लौकिकान्यलौकिकानि च सुखानि भुङ्क्ते । अन्ते धर्माचरणद्वारा शुद्धान्तःकरण एव पुरुषः परमानन्दं मोक्षमपि लभतेऽनायासम । लोके सामाजिकी व्यवस्थापि धर्मेणैव कष्टमन्तरा सिद्ध्यति । यद्धि राजकीय-विधानसहस्रैरपि साधयितुं काठिन्येनांशत एव पार्यते तद्धर्मेणाऽनायासमेव साधयितुं शक्यते प्रजाकल्याणाय चौर्यलुण्ठनादिनिवारणाय नृपतिभिः कठोरातिकठोरा यन्त्रणा दीयन्ते सहस्रशो यत्नाश्चाचर्यन्ते यदर्थं भूयानर्थव्ययः रक्षापुरुष-व्यवस्थादि-प्रपञ्चश्च भवति करणीयः, परं धर्मस्याऽस्तेयनियम-प्रचारणेन सहानुभूति-समवेदनादिसद्भावजागरणेन स्वयमेव तथाविधाः सर्वेऽप्यत्याचारा निवर्तन्ते । धर्मस्यास्ति-आदेशः, "परद्रव्याणि लोष्ठवत्" "मातृवत् परदारेषु" "आत्मवत्सर्वभूतेषु" । अयं खलु धर्म एव सर्वेषामुद्दण्डानां नियामकः, किम्बहुना उद्दण्डस्य राज्ञोऽपि नियामको धर्म एव । धर्म एव जगतः प्रतिष्ठा, धार्मिक एव सर्वेषां पूज्यः, धर्म एव सर्वेषां पापानां निवारकः, सर्वं चेदं धर्मे प्रतिष्ठितम्, यथाहुस्तैत्तिरीयाः—"धर्मो विश्वस्य जगतः प्रतिष्ठा, लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदन्ति, धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति ।"

धर्म एव च ब्राह्मणस्य ब्राह्मणत्वं स एव क्षत्रियस्य क्षत्रियत्वं वैश्यस्य वैश्यत्वं शूद्रस्य शूद्रत्वं पुरुषस्य पुरुषत्वं स्त्रियः स्त्रीत्वं च किम्बहुना सर्वेषामपि तत्त्वं धर्म एव । धर्मं विना मानवो नास्ति मानवः किन्तु दानवः मणिहीनो नागो दाहहीनो वह्निश्चन्द्रहीना निशा च यथा निस्सारा निश्शोभा च विद्यते तथैव धर्महीनो मानवः । सुखशान्तिमूलं धर्म एव—यदा जगति धार्मिका भावा जागरिता अभूवन्; गेहे गेहे देशे राष्ट्रे विश्वस्मिन् विश्वे च तदासीत् शान्तेः साम्राज्यम् । वर्तमानयुगीनास्तु सुधारकंमन्या नेतारो धर्मं दूरतो निक्षिप्य सुखं शान्तिं च नीत्या साधयितुं कामयन्ते धर्मं

चाभ्युदयसाधने प्रत्युत बाधकं मन्यन्ते, दयनीयाः खलु ते वराका यतो भ्रान्तास्ते धर्मस्य वास्तविकं तत्त्वमजानन्तः परम्परा-प्रचलिताः काश्चिद् विकृता रूढीरेव धर्मं मन्यमानाः सन्ति। समस्तानां सुखानां शान्तीनामन्ततः परमानन्दप्राप्तेरपि साधनं धर्म एव। धर्मे अविश्वासस्य पारस्परिक-कलहस्य प्रवञ्चनायाः प्रतारणस्य च कृते स्थानमेव नास्ति। धार्मिको हि मानवः सर्वान् सुहृद एव वाञ्छति प्रार्थयते च भगवन्तम्—

"मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।
मित्रस्य चक्षुषा समीक्षामहे॥"

अद्य विश्वशान्तेः समीहा नेतॄणां हृदयेषु विशिष्टं स्थानं रक्षति, विश्वशान्तिरियं केवलं धर्मेणैव साधयितुं शक्यते। धर्मविहीना नीतिः कदापि विश्वशान्तेः कारणं न भवितुमर्हति। यतः सहानुभूति समवेदना-प्रेमादयो हि धर्मस्यैव मौलिकाः सिद्धान्ताः सन्ति। धर्मः कस्मिन्नपि अत्या-चारं कर्तुं नैव वाञ्छति। प्रत्युत सर्वत्रापि आत्मीयताभावनामेव जागरितां द्रष्टुमभिलषति। अयं चास्ति धर्माचार्याणां डिण्डिमघोषः—

"श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥"

विपरीतमस्मात् नीतेः सर्वस्वमस्ति—"स्वार्थसाधनम् परवञ्चनं च"। तस्यास्तु चारिताथ्र्यमेव परकीय-सर्वस्वहरणे, स्वकीयैश्वर्य-परिवर्धने परेषां शोषणे एव च मन्यते, इति कथमियं विश्वशान्तिं साधयितुं प्रभवा भवेत्। नीत्यां विश्वासस्य कृते स्थानमेव नास्ति, धर्मविहीनया नीत्यैव व्यवहरतां कूटनैतिकानां वर्तमानयुगीनानां पाश्चात्यानां पौरस्त्यानां वा नेतॄणां विश्वशान्ति-डिण्डिमघोषणं केवलं प्रवञ्चनमात्रमेवास्ति।

किञ्च दृष्टमेतदितिहासग्रन्थेषु विपश्चिद्भिर्यत् धर्मपरायणा व्यास-वसिष्ठादयो महर्षयः शुक-वामदेव-प्रभृतयो विज्ञानिनः, जनकयुधिष्ठिरादयो राजर्षयश्च केवलस्य धर्मस्याश्रयेणैव समस्तमभ्युदयं निःश्रेयसं चाधिजग्मुः। अहो धर्ममूर्तेर्मर्यादापुरुषोत्तमस्य भगवतः श्रीरामचन्द्रस्य धर्ममर्यादामये राज्ये कीदृशी परमा शान्तिर्बभूव, राजा वा प्रजा वा सर्वे सन्तुष्टाः प्रसन्नाः,

नासीत् कोऽपि दुःखी, असन्तुष्टो वा, अद्यापि शान्तिमयं शासनं स्मरन्तो नरा रामराज्यमानेतुं कामयन्ते। यौधिष्ठिरं धर्मराज्यं कामयमाना हि तात्कालिकी प्रजा धर्मविरुद्धं कौरवराज्यं नाङ्गीचकार। धर्ममतिक्रम्य निर्मर्यादं प्रवर्तमानानां महामहतामपि साम्राज्यानि धूलिधूलितानि बभूवुः। यत्र निदर्शनानि हिरण्यकशिपु–रावण–वेन–दुर्योधनप्रभृतयो न सन्ति परोक्षा विपश्चिदपश्चिमानाम्। धार्मिका हि नृपतयः प्रजाः स्वाः प्रजा इव पालयन्तो धर्मेणावर्तन्त, प्रजायाः कल्याणाय स्वं सर्वस्वमपि त्यक्तवन्तः। अद्यापि तेषां भूतपूर्वाणां धार्मिकाणां कीर्तिकौमुदी समस्तं जगद् मोदयन्ती विराजते। अहो अद्य धर्मविमुखानां निरीक्ष्यतां कीदृशी विद्यते दुर्दशा–प्रजा राजतोऽसन्तुष्टा विद्रोहमाचरितुं समीहते, राजा च प्रजां विविधैः षड्यन्त्रैर्वञ्चयितुं प्रतारयितुं शोषयितुं च प्रयतते, प्रचलित राजप्रजयोः सङ्घर्षः पितापुत्रयोः सङ्घर्षः, गुरुशिष्ययोः, पतिपत्न्योः सङ्घर्षः, स्वामिसेवकयोः, शासकशासनीययोः ज्येष्ठकनिष्ठयोः सर्वयोरेव प्रचलति भयानकः सङ्घर्षः, यस्य भीषणतरः परिणामो न जाने किं भविष्यति। वर्तमानानां दूषितधियां निर्मर्यादानां सम्राजां धर्मविरुद्धैराचरणैः "साम्राज्यं" परमघृणास्पदं वस्तु सञ्जातम्। स्वार्थलोलुपानां नेतृणां च दुष्कृत्यैः सर्वा अपि मर्यादाश्छिन्नभिन्नाः सञ्जाताः। समुद्भूता विविधा विवादा नास्ति सन्तुष्टः कोऽपि, निखिलानामपि स्वान्तं छलस्य कौटिल्यस्य च भाजनीभूतं सञ्जातम्। सर्वमिदं धर्मत्यागस्यैव फलम्।

अद्यापि पुनर्यदि धर्मः सुरक्षितः स्यात्, धर्म-मर्यादाः पुनरुद्धारमाप्नुयुः, राजा राजधर्मे तिष्ठेत्, वास्तविकतया पिता पालयिता च जायेत, प्रलम्भनं वञ्चनं शोषणं च परित्यज्य सर्वापद्भ्यो निजप्रजानां रक्षणं विदधीत, प्रजा चापि स्वस्वधर्मे वर्तमाना सत्कर्माणि समाचरेत्, धर्ममर्यादानां च परिरक्षणं क्रियेत, क्षणे एव सर्वा विपदो विपद्येरन्; निखिला विवादा विलीयेरन् कलहाश्च समस्ता उपशाम्येयुः निवर्तेरँश्च सर्वे सङ्घर्षाः। धर्मत्यागाद्दानवीभूतोऽयं मानवः पुनर्मानवतामाप्नुयात्। धर्माचरणमेव पुंसो वास्तविकं परमात्मपूजनं येन सर्वा सांसारिकी व्यवस्था पुरुषस्य वैयक्तिकं जीवनं च सर्वोच्चतरं भवितुमर्हति। धर्मशब्दे एव सर्वमपि मानवकर्तव्यं

समायाति, येन स निजां मानवतां सफलयितुं भवति समर्थः। मानवजीवन-चरमलक्ष्यं परमा शान्तिः=सच्चिदानन्दपदप्राप्तिरेतेन धर्माचरणेनैव सिद्ध्यति, सर्वमिदं रहस्यजातं निभालयन्तो धर्माचार्या एकमात्रं धर्ममेवाऽऽचरणीयमुद्घोषयन्ति। एतमेव च सिद्धान्तं मनसि निधाय आचार्यकुलादुन्निवर्तमानमन्तेवासिनम् आचार्यो दीक्षान्तभाषणे उद्बोधयन्ननुशास्ति— "धर्मं चर" इति।

## ( १५ ) ब्रह्मचर्यम्

[ ब्रह्मचर्यं=वीर्यरक्षा, जीवनस्य मूलमन्त्रोऽयम्। चतुर्णामपि धर्मार्थ-काम-मोक्षाणां पुरुषार्थानां प्रधानतमं साधनं ब्रह्मचर्यमेव। ब्रह्मचर्यपालनं मनुष्यस्य मुख्यं कर्तव्यम्। वर्तमानकाले ब्रह्मचर्योपेक्षया यादृशी दुर्दशा सञ्जाताऽस्ति तस्याः सजीवमिव चित्रं प्रस्तावेऽस्मिन् दर्शितम्। अन्ते च ब्रह्मचर्यपालनोपयोगिनः, वीर्यरक्षा-साधनीभूताः सप्त नियमाः संदर्शिताः, सत्यमेव येषां नियमतः पालनेऽवश्यं सफलता करतलगतैव वीर्यरक्षायाम्। ]

पुरा शतायुषः सहस्रायुषश्च पुरुषा बभूवुः शान्ता दान्ताः परिपुष्टशरीराः सुधीरा महावीराः सुन्दरतर-विशालाकृतयो विपुलशक्तयः, साक्षात्कृत-सकल-तत्त्वाः शुद्धसत्त्वाश्च। अद्यत्वे पुनर्यो वै षष्टिवर्षाणि जीवति मन्यते स दीर्घजीवी, कश्चिदेव महाभागः शतं वर्षाणि जीवति। विश्वेऽपि विश्ववासिनः प्रायो जर्जरितदेहा विकृताकृतयः क्षीणशक्तयो मलिनमतयः कातरस्वान्ता अशान्ता वामनाकाराः प्रोद्भूतविकारा अनेकरोगाक्रान्ताश्च विद्यन्ते। प्रतिशतं पञ्चविंशतिः पुरुषास्तु क्षय-राजयक्ष्मादि-पाप-रोगक्षपितशक्तयः कतिचन जीवनदिनानि गणयित्वाऽकाले एव कालकवलिता जायन्ते। बहवश्च द्वित्रेष्वेव हायनेषु गर्भयातना एव भोक्तुमागता इव बाला एव विपद्यन्ते। अहो दुर्विलसितं विधेः, ते एव वयम्; सैवेयं भूमिः; तदेव निर्मलं

जलम्; स एव पावनः पवनः, किन्तु नास्ति तद् दीर्घं वयः; न जाने क्व गतं तद् बाहुवीर्यम्; क्व च गतं तद्धैर्यम्? किमिति प्रनष्टं तद्बुद्धिवैभवम्? क्व पलायिता सा बहुशक्तिमत्ता? नास्ति तच्छरीर-सौन्दर्यम्, विशालता चाकारस्य, क्व गता सा विद्या तत्त्वावगमशक्तिश्च, क्व च सा विशुद्धसत्त्वता? किं तच्चिरत्नं रत्नमस्माकं विनष्टं यद्रहिता वयं मणिविरहिता नागा इव, विगतसरसिजानि सरांसीव, राका इव विलुप्त-चन्द्रतारका न शोभामहे, परस्सहस्राणि कष्टानि च भुञ्ज्महे, पदे पदे परिभूयामहे, परश्शतैः पापरोगैराक्रम्यामहे, अकालमृत्युना चापह्रियामहे, किमिति च स्वजीवनोद्देश्यं पूरयितुं न पारयामहे? इति प्रश्नपरम्पराया एकमेवोत्तरम्—यद् "ब्रह्मचर्याभाव एवात्रैकमात्रं कारणम्" ब्रह्मचर्यमेव तदमूल्यं रत्नं यद्विनाशाद् वयं नरककीटा इव बहोः कालाच्चेखिद्यामहे अनन्तानि कष्टानि च भुञ्ज्महे।

अथ किमिदं 'ब्रह्मचर्यम्' नामेति विचारणीयं सम्प्रति—"गुप्तेन्द्रियस्य उपस्थसंयमो ब्रह्मचर्यम्" इति पातञ्जलयोगभाष्ये व्यासः, संयतसमस्तेतरेन्द्रियस्य साधकस्य उपस्थेन्द्रियसंयमो ब्रह्मचर्यम् इति तदर्थः, इतरेन्द्रियसंयमपूर्वकमेव क्रियमाणो जननेन्द्रियसंयमो भवति सफलो नान्यथेति न केवलमुपस्थसंयमो ब्रह्मचर्यमुक्तम्। अत एव चान्यत्र अष्टविध-मैथुन-परित्यागस्य ब्रह्मचर्यत्वमवाचि यथा—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्॥

अत्र क्रियानिर्वृत्ति-(सम्भोग)-वर्जनमेव उपस्थसंयमरूपा मुख्या अष्टमी विधा ब्रह्मचर्यस्य, इतराश्च सप्तापि मनोबुद्धिसहित-चक्षुरादिसमस्तेतरेन्द्रिय-संयमान् मुख्यसिद्धयेऽपेक्षितान् प्रतिपादयन्ति। "ब्रह्म-वेदः तदध्ययनार्थं चर्यमाणं व्रतं-ब्रह्मचर्यम्" इति निर्वचनं कुर्वाणा इतरे वेदाध्ययनार्थं क्रियमाणं व्रतविशेषं ब्रह्मचर्यं वदन्ति। इदमेव च 'ब्रह्मचर्याश्रम" इत्युच्यते, एतस्यापि पूर्वापरपर्यालोचनया उपस्थसंयमो=वीर्यरक्षैव ब्रह्मचर्यमिति तत्त्वं पर्यवस्यति। ब्रह्मचर्याश्रमश्च वीर्यरक्षायाः क्रियात्मकः प्रकारः, नैनमन्तरा वीर्यरक्षा वास्तविकी केनापि प्रकारान्तरेण भवितुमर्हति, वीर्यरक्षा-

मन्तरा च परमपुरुषार्थसाधन-प्रतिपादका अतिगंभीररहस्यमया वेदा निर्वीर्यैर्मस्तिष्कशक्तिशून्यैः कथमपि नाधिगन्तुं शक्यन्ते इत्यत एव ब्रह्मचर्यवेदाध्ययनयोरेषोऽनिवार्यः सम्बन्धोऽवस्थापितः खलु महर्षिभिः। "ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः" इति योगसूत्रमपि वीर्यलाभाय ब्रह्मचर्यमेव पालयितुं प्रोत्साहयति। ऐहलौकिक-पारलौकिक-सुखसिद्धये ब्रह्मचर्यपालनं परमावश्यकम्—वीर्यरक्षा महता प्रयत्नेन पुरुषार्थचतुष्टयप्राप्तयेऽवश्यं कर्तव्या।

वीर्यं हि शरीरे सप्तमः सर्वोत्तमोऽन्तिमो धातुः,—यथा चोक्तं सुश्रुताचार्येण—"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते।
मेदसोऽस्थि ततो मज्जा मज्जायाः शुक्र-सम्भवः॥"

शुक्रं वीर्यमिति नार्थान्तरम्। वीर्यमेव शारीरिकीं मानसीं च पूर्णतां सम्पादयति, वीर्यमेव शरीरेऽस्मिन् सर्वशक्तीनां 'राजा'। एतद्बलेनैव शरीरस्थाः सर्वा अपि शक्तयः कुर्वते कार्याणि—पश्यति चक्षुः, जिघ्रति घ्राणम्, शृणोति श्रोत्रम्, स्पृशति त्वक्, स्वदते रसना, मनो मनुते, अध्यवस्यति च बुद्धिः। विनष्टे तु वीर्ये राजनि विनिश्यन्ति खलु सर्वा अपीतराः शक्तयः। अराजकं राष्ट्रमिव च सर्वतो विप्लवाऽऽप्लुतं भवतीदं शरीरं, मरणं चापद्यते पुरुषः, वस्तुतो वीर्यरक्षणमेव जीवनम्, वीर्यविनाश एव च मरणम् तथा चोच्यते—"मरणं बिन्दुपातेन जीवनं बिन्दुरक्षणात्" इति। वीर्याभावे प्रबलीभवन्ति दोषा द्विषः, भवति तन्मूलानाम् अनेकेषां रोगाणामाक्रमणम्। अन्ते च जर्जरितमिदं शरीरम् असमये एव प्रणश्यति। रक्षिते पालिते च विर्ये राजन्वान् देश इव सदा सुव्यवस्थितं तिष्ठतीदं शरीरम्, समस्ताश्च शरीरशक्तयः सुष्ठु निर्वहन्ति स्वानि स्वानि कार्याणि, नावकाशो द्विषां दोषाणां प्रवेशस्य, क्व स्यादवकाशस्तदा तदाश्रयाणां रोगाणाम्। सर्वा अप्यार्तयः सर्वथा दूरतः परित्यजन्ति, अकालमृत्युरपि भीत इव पलायते ब्रह्मचारिणः। तथा चेयं श्रुतिः—"ब्रह्मचारी न काञ्चनार्तिमार्च्छत्" "ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत"। ब्रह्मचर्यपालनं हि मानवस्य मुख्यं सर्वप्रथमं च कर्तव्यम्, तत एव सम्पाद्य योग्यतां प्रबोभूयते मनुष्यः पूरयितुं जीवनोद्देश्यानि धर्मार्थ-काम-मोक्षान्। एतां सर्वार्थसाधिकां मानव जीवनमूलभूतां वीर्यरक्षामेवोद्दिश्य परमकारुणिकैः साक्षात्कृत-धर्मभिः पूज्यैर्मह-

र्षिभिर्मानवजीवनं चतुर्धा आश्रमेषु विभज्य प्राथम्यं तत्र मुख्यत्वं च ब्रह्मचर्यस्य प्रतिपादितम्। यतः प्रथमे एवायुषो भागे वीर्यरक्षा क्रियात्मकरूपेण निष्पन्ना भवेत्। दृश्यतां कीदृशी मनोहरा पुरातनी महर्षिजनप्रवर्तिताऽऽश्रमपद्धतिः, यत्र सर्वप्रथमं वीर्यरक्षया शारीरिकीं वेद-वेदाङ्गशास्त्रशिक्षया मानसीं च योग्यतामधिगम्य पूर्णतया योग्या भूत्वा द्विजा आश्रमान्तरेषु प्रवेशमलभन्त। तथाचरतां च तेषां न भवति स्म क्वापि शारीरिकीणां मानसीनां वा यातनानाम् आभिमुख्यम्। आसँश्च तदाऽनेकशो ब्रह्मचर्याश्रमा आचार्यकुलानि च यत्र प्राकृतिक-व्यवस्थाऽऽनुकूल्यात् क्रियात्मकतयाऽनायासमेव पालिता अभूवन् वीर्यरक्षानियमाः,–वनेष्वाश्रमाणां स्थितिः शुद्धं जलम्, पवित्रतरः पवनः, सात्त्विकः कन्दमूलफलप्राय आहारः, सङ्गो गुरूणाम्, अध्ययनं वेदवेदाङ्गानाम्, नियमेन सन्ध्योपासनं प्राणायामश्च, प्रत्यहं सायंप्रातर्होमः, अनुकूलो व्यायामः, अनुष्ठानं सावित्रीव्रतस्य। नासीत् कामविकारहेतूनां स्वप्नेऽप्युपलब्धिः, दूरापास्ता तत्र वीर्यविनाशस्य तु शङ्काऽपि, अत एव चासँस्तदानींतना मानवाः शान्ताः, शुद्धान्तःकरणाः, महाबलिनः प्रतिभाशालिनः, अतुलप्रभावाः, समुद्भूतसद्भावाः, हृष्टपुष्टशरीराः, वीराः, दीर्घायुषः, सत्यप्रतिज्ञाः, सकलरहस्याभिज्ञाः, परमपवित्राः, अनुकरणीयचरित्राः वशिष्ठ-गौतम-भृगु-कणाद-पराशर-प्रभृतयो ब्राह्मणाः, भगीरथ-राम-युधिष्ठिर-कर्णार्जुन-भीमादयो राजन्याश्च। अद्य येषां नामानि गृहीत्वाऽपि मोमुद्यते चेतः रोमाञ्चैरञ्चितं भवति शरीरम्। को नाम न परिचित आजन्मब्रह्मचारिणः कुरुकुलमुख्यस्य प्रातःस्मरणीय-नाम्नो भीष्मपितामहस्य परमपवित्रेण चरित्रेण, यस्याग्रे सर्वशक्तिमतो लीलावतारस्य भगवतः श्रीकृष्णचन्द्रस्याऽपि शस्त्राऽग्रहणप्रतिज्ञाऽभज्यत। यश्चान्ते परस्सहस्र-बाण-विक्षत विग्रहोऽपि चिरं बाणशय्यामधिशयानः स्वेच्छया उत्तरायणगते सूर्ये प्राणान् तत्याज। महावीरस्य श्रीमतो हनूमतः समुद्रलङ्घन-भूधराऽऽनयनादिकम् अद्भुततमं निखिलमपि वृत्तं ब्रह्मचर्य्यविजृम्भितमेव।

साम्प्रतं तु कलिकालदुर्विलासेन, द्विजानामेव वा दौर्भाग्येन परमात्मकोपेनैव वा विनष्टा सा चिरन्तनी खल्वाश्रमपद्धतिः, विलीना सा ब्रह्मचर्य मर्यादा। विलासप्रायमिदं युगम्, इदं युगीनाश्च प्रायः सर्वे विलासिताया

एव दासाः, ब्रह्मचर्यस्य तु नाम्नोऽपि ह्रीणीयन्ते, दिने दिने हीनवीर्यतां प्रपद्यमानाः स्वप्नस्खलितवीर्या नपुंसकतां चापद्यमानाः सन्ति। युवकेषु वीर्यहीनतया अद्य परवशता दोषा हानयश्च प्रत्यक्षमनुभूयन्ते यथा—तेजोहीनता, चक्षुर्दौर्बल्यम्, अङ्गशैथिल्यम्, देहकार्श्यम्, बुद्धिमान्द्यम्, हृदयदौर्बल्यम्, इन्द्रियशक्तिक्षयः, भीरुत्वम्, दैन्यम्, उत्साहाभावः कार्याऽक्षमत्वम्, पाचनशक्तिविनाशः, नित्यरोगित्वम्, अकालपालित्यम्, विषमस्वभावत्वम्, आलस्यप्रियत्वम्, कान्तिहीनता, सततचिन्तापरायणता, असमये एव मरणं चेति। दशामिमामवलोक्य विदीर्यते हृदयम् तमसाऽऽच्छाद्येते चक्षुषी; विघूर्णते विदुषामपि मस्तिष्कम्। कथंकारं साम्प्रतं स्याद्वीर्यरक्षा, पुरातनी ब्रह्मचर्याश्रममर्यादा न सम्भविनी युगेऽस्मिन्। परं सन्ति केचिन्नियमास्तादृशा येषां दृढतया पालनेन साम्प्रतमपि वीर्यरक्षा कर्तुं शक्यते, ब्रह्मचर्यं च पालयितुं पार्यते, युवकैरत्र परमसावधानैर्भवितव्यम्। ते च नियमाः सङ्क्षेपतोऽधस्तात् प्रतिपाद्यन्ते—

(१) **भावशुद्धिः**—विकृतैर्भावैर्विनश्यति वीर्यम्, कामविकारमया भावाः सर्वथा त्याज्याः, शुद्धाः सात्विका भावाः स्युरित्येतदर्थं सर्वदा प्रयतनीयम्। तदर्थं शास्त्रसिद्धान्तानुसारं सर्वस्त्रीषु मातृभावं कुर्यात्। अथवा उच्चवयस्कासु मातृभावं, समानवयस्कासु भगिनीभावम्, अल्पवयस्कासु च पुत्रीभावं भावयेत्, एतेषु हि भावेषु नास्ति खलु सम्भवः कामविकारस्य। भावशुद्धये च दुःसङ्गः सर्वथा त्याज्यः, अश्लीलवार्तालापो दूरतो वर्जनीयः, मनोविनोदकामनयाऽपि शृङ्गारमयं साहित्यं नैव पठनीयम्। वैलासिकानि गीतानि न शृणुयात्, स्त्रीपात्रप्रायाणि नाटकानि चलचित्राणि च कदापि न पश्येत्, एतेषां दर्शनं भावविकारकारीति निश्चप्रचम्। भगवद्गीतादिसद्ग्रन्थानां स्वाध्यायं कुर्यात्। अथवा वीररसप्रायाणि वीरचरितानि पठेत्, तादृशीरेव पारस्परिकचर्चाश्च कुर्यात्। रात्रौ शयनकाले प्रातः प्रबोधकाले च भावशुद्धये शिवसङ्कल्पादिमन्त्रैर्भगवन्तं प्रार्थयेत्।

(२) **नियमितो व्यायामः**—वीर्यरक्षायै पुरुषेण व्यायामोऽवश्यं करणीयः। व्यायामेन हि सर्वापि शारीरकी रसादिक्रिया सुव्यवस्थिता तिष्ठति। भुक्तमन्नं सद्यः पच्यते। वर्धते उत्साहः, नावकाशं लभन्ते रोगाः,

न विकृतिमापद्यते वीर्यम्, शुद्धं च वीर्यं स्थिरं जायते। किन्तु व्यायामो यथाबलमेव करणीयः, "अयथाबलमारम्भो निदानं क्षयसम्पदः"। यथाबलं व्यायामो वीर्यरक्षाकामुकैरवश्यमेव करणीयः।

**(३) शुद्धवायुसेवनम्**—प्रतिदिवसं सायं प्रातश्च शुद्धस्वच्छवायुमवश्यं सेवेत्। शुद्धवायु-सेवनेन सायं प्रातर्भ्रमणेन च शारीरिकं मलिनतत्त्वं विनश्यति, शुद्धतत्त्वं च शरीरपोषणोपयोगि प्राप्यते। जनसम्बाधमये स्थाने वायुर्मलिनो जायतेऽतो यथाशक्यम् एकान्ते दूरे वनादौ पवित्रतरपवने पूततमे स्थाने निवसेत्, दिवसे किञ्चित्कालं तु अवश्यं तत्र शुद्धवायुं सेवेत। तेन वर्धते आरोग्यम, स्थिरीभवति वीर्यम्, प्राप्यते आह्लादः, प्राकृतिक-दृश्यदर्शने च भवति बुद्धिविकासः।

**(४) सात्त्विक आहारः**—वीर्यरक्षाव्रती सदा सात्विकान् आहारान् कुर्यात्। भुक्तमन्नमेव मनोरूपेण परिणमते, आहारस्य सात्विकत्वे मनोऽपि सात्विकं भविष्यति, सात्विके च मनसि न भविष्यन्ति राजसास्तामसाश्च कामविकारमया भावाः, येन प्रसङ्ग एव नायास्यति वीर्यविनाशस्य। सात्त्विकश्च आहारो गीतायामुक्तो यथा—

"आयुः-सत्त्व-बलारोग्य-सुख-प्रीति-विवर्धनाः।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विक-प्रियाः।"

अतिलवण-रूक्षातितीक्ष्णात्युष्ण-दुःख-शोकामयप्रदान् राजसान्, गतरस-पूति-पर्युषिताऽमेध्यान् तामसाँश्च आहारान् वीर्यरक्षाकामः सर्वथा वर्जयेत्। सात्त्विकानेवाहरेत्। सात्त्विकाहारे हि वीर्यं शुद्धं स्थिरं चोत्पत्स्यते, यच्च न वृथा विनङ्क्ष्यति।

**(५) ईश्वरोपासना प्राणायामश्च**—वीर्यरक्षायै परमात्मोपसनायाः प्राणयामस्य च विद्यते परमा आवश्यकता, त्रैवर्णिकानां सन्ध्योपासने सर्वं समाविशति खल्विदम्, ईश्वरोपासनया प्राणायामेन च शुद्धा भवन्ति मानसा भावाः, प्रसीदति चित्तम्, लभ्यते चालौकिकं सामर्थ्यम्, विनश्यति दैन्यम् परमात्मकृपया प्राप्यते वीर्यरक्षाशक्तिः, दुर्भावानां विनाशश्च। अत्र गायत्रीमन्त्रजपेन तु भूयान् लाभो भवति, यदि शास्त्रीयनियमपूर्वकं नियमितव्रतरूपेण जपः क्रियेत।

(६) **विलासितावर्जनम्**—अद्य विलासिताया विद्यते साम्राज्यम्, एषा हि वीर्यरक्षाया महान् शत्रुः। वैलासिक-वेशभूषादिकं वीर्यरक्षाव्रती सर्वथा वर्जयेत्, सात्त्विकं साधारणं वेशं रक्षेत्, वैलासिकानि वस्तूनि=सुगन्धित-तैल-साबुनादीनि नोपयुञ्जीत, एतेन हि मनसि विकृता भावा जायन्ते येन वीर्यरक्षाऽसम्भवीभवति। अत एव ब्रह्मचर्यनियमेषु दर्पण-दर्शनादेरपि नियमतो निषेधः कृतोऽस्ति।

(७) **आत्मनिरीक्षणाभ्यासः**—रात्रौ शयनात्प्राक् आत्मनिरीक्षणं प्रत्यहं क्रियताम्, यत्—पालनाय प्रतिज्ञाताः सर्वे नियमा पालिता भवन्ति न वा? कुत्र स्खलितं जातम्, तत्र प्रायश्चित्ताय प्रतिज्ञा क्रियताम्। एवं निरन्तराभ्यासेन नियमानां पूर्णतया पालनं प्रचलिष्यति। कुत्रापि प्रमादो न भविष्यति, सति च प्रमादेऽवश्यं प्रायश्चित्तं क्रियताम्, येन पुनः प्रमादो न भवेत्।

नियमसप्तकस्यैतस्य पालनेऽवश्यं वीर्यरक्षा भवितुमर्हति, ब्रह्मचर्यं च तत्त्वतः पालितं भविष्यति। तपस्विजीवनमेव ब्रह्मचर्यं=वीर्यरक्षां साधयति, इत्यतः तपस्विजीवनैर्भवितव्यं सर्वैरपि—आत्मकल्याणकामुकैरिति पर्यवस्यति, येन वीर्यरक्षायां सिद्धायां पालिते ब्रह्मचर्ये मानवस्य जीवनं सफलं भविष्यति, परमपुरुषार्थस्य मोक्षस्याधिगमाय लौकिकानां पारलौकिकानाञ्चापि सर्वेषां सुखानां प्राप्तये ब्रह्मचर्यमिदमवश्यं पालनीयं सर्वैरपि मानवैः। अत्र श्लोकाः—

ब्रह्मचर्यं=वीर्यरक्षा कर्तव्या सर्वयत्नतः।
पालिते ब्रह्मचर्ये हि प्राप्यन्ते सर्वसम्पदः॥
जातायां वीर्यरक्षायां रोगा नश्यन्ति सर्वतः।
नीरोगं जीवनं दिव्यं पुरुषस्य भवेद्ध्रुवम्॥
धर्मार्थ-काम-मोक्षाणामारोग्यं मूलकारणम्।
आरोग्यस्य च मूलं तु वीर्यरक्षैव तत्त्वतः॥
तस्मात्सर्वप्रयत्नैस्तु सर्वैरेव च मानवैः।
पालनीयं ब्रह्मचर्यं सर्वानन्द-प्रदायकम्॥
साधनं ब्रह्मसंप्राप्तेः सुखानां मूलमुत्तमम्।
ब्रह्मचर्यव्रतं पुण्यं पालनीयं प्रयत्नतः॥

---

# (१६) आपदां तरणिर्धैर्यम्

(ले० उपाचार्यः श्री पं० यशोदेवशास्त्री साहित्याचार्यो हिन्दीप्रभाकरो विद्यालङ्कारः)

[ सम्पदो विपदश्च सर्वेषां पर्यायेण भवन्त्येव, विपत्सु धैर्यमेवैकमवलम्बनं पुरुषस्य, धैर्येणैव विपत्समुद्रं तरति मनुजः। विषयोऽयं परमसुन्दरतया विशकलितः प्रस्तावकेन विदुषा ऐतिहासिक्यो घटनाश्च प्राचुर्य्येणोपन्यस्ता एतद्विषयकाः। ]

को नाम जगति जन्मवान् यः कदापि विपद्भिर्नाभिभूतो भवेत् सर्वस्यापि कार्यकर्तुर्जनिजुषोऽग्रे धृतविघ्नविग्रहा आपदो दुःखाय समुपतिष्ठन्ते। अतीता वर्तमानाश्च सर्वेऽपि देव-मानुष-पशु-तिर्यगादय आपद्ग्रस्ताः समवलोक्यन्ते श्रूयन्ते च। दैत्यै राक्षसैश्च प्रतिहन्यमानानां स्वर्गान्निर्वासितानां देवानां, प्रबलैः शत्रुभिर्हृतराज्यश्रीणां वने बम्भ्रम्यमाणानां पार्थिवानां प्रियतमैर्विप्रयुक्तानां प्रेयसीनां, माता-पितृविहीनानां बालानां, लुब्धक-पाश-पाशितानां पशुपक्षिणाञ्च न बलं बुद्धिर्धनादिकं वा रक्षकं धैर्यमेव केवलं शरणम्। नैनद्विना कस्याप्याश्रयेण ते प्राणान् धर्तुं क्षमाः। धैर्य्येण दुःसाध्यमाशातीतमपि कार्यं सिद्ध्यति। आपद्ग्रस्तोऽपि मुच्येत। विघ्नदावानलोऽपि वारीयते। दृश्यताम्—समयो निशीथः, भयङ्करजन्तु-शतसङ्कुलम् अगाधं सागरसलिलं, समुद्रमध्यगो महार्घवस्तुभिर्यात्रिभिश्च परिपूर्णः पोतो झञ्झावातैः क्षणादधः क्षणाच्चोपरि नीयते, यात्रिणश्च केचिन्निःसंज्ञाः प्राप्तसंज्ञाश्च केचिज्जीवने निराशाः सुतदारगृहादिकं स्मरन्तो रोरुद्यन्ते, इदानीं किन्नु कुर्यात् पोतपतिः कस्य वा शरणं यायात्? केवलं धैर्य्यमेव तस्य शरणम्, तदेव बलम्—तदेव बुद्धिदायकः सहायकः। स च कथं कथमपि पोतं स्थिरयन् यात्रिणश्चाश्वासयन्नापत्कालं यापयति। स्वयं धैर्यतरणीमारूढोऽन्याँश्चारोहयन् स्वात्मानमन्याँश्च परं पारं नयति।

श्रूयते देवा अपि दैत्यैस्तारक-हिरण्यकशिपु-प्रभृतिभी राक्षसैश्च रावणमेघनादादिभिः प्रतिहन्यमाना भ्रष्टराज्या हृतश्रियोऽशरणाः पर्वत-गुहासु निलीय धैर्येणैवापत्कालं यापितवन्तः। शतशो वर्तमानाश्चक्रवर्त्तिनो जापान-जर्मनी-भूमिपतयः प्रबलैः शत्रुभिर्दन्दम्यमाना हतवीरा हृतराज्य-श्रियो धैर्यादृते किं कुर्युः कथमिव प्राणान् धारयेयुः।

इतरेऽपि पुरुषोत्कर्षहेतवः शौर्य-दया-दाक्षिण्यादयो गुणा धैर्य-मवलम्ब्यैव प्रवर्तन्ते। नहि कश्चित् शूरो दानी दयालुर्वा धैर्यं विना तत्पदवीमारोढुं क्षमः। शूरेषु प्रथितनामानः पाण्डुपुत्रा युधिष्ठिरप्रभृतयः कैतवेन द्यूते पराजितास्त्रयोदशवार्षिकं वनवासं दत्त्वा नगरान्निर्वासिता अपमानितस्त्रियो धैर्येणैव वनवास-समयं विराटनगरेऽज्ञातवास-समयञ्च यापयित्वा स्वल्पसहाया अपि विजिग्यिरे। कर्णप्रभृतयो दानवीराः शिवि-प्रभृतयो दयावीराश्च एनेनैव महत्त्वं गताः। महाभारत-समरेऽर्जुनेन युध्यमानः छिन्नधन्वा विरथः कर्णो भूमौ पपात, शस्त्रैः क्षत-विक्षतविग्रह उत्थातुमक्षमोऽपि विप्रवपुषा भगवता परीक्षितुं याचितः आसन्नमृत्युरपि धैर्येणैव दन्तमणिं दत्वा स्वदानवीरतां ररक्ष। कस्य न विदितं स्वहस्ताभ्यां स्वमांसोत्पाटिनः शिवेश्चरितम्। देवैर्हनुमतो धैर्यं परीक्षितुं प्रेषितया सुरसया हनुमानर्धपथ एवावरुद्धः। सम्मुखे मृत्युवत् करालदंष्ट्रं शतयोजनविस्तीर्णं सुरसाननं, नीचैस्तिमिङ्गिलाद्या-कीर्णः सागरः प्रत्यावर्तनमप्यवलम्बं विनाऽसम्भवि, यदि स स्वारसिकं धैर्यं नावालम्बिष्यत, तर्हि कथमिव सीतासाक्षात्काराय प्राभविष्यत्, सुरसया कथमपि मुक्तोऽपि सागरवासिना छायाग्राहिदैत्येन मृत्युं गमितोऽ-भविष्यत्, धैर्यतरिण्यैव स सुरसा-महानदीं निस्तीर्य छायाग्राहिदैत्यापत्सा-गरमपि निस्तीर्णवान्।

धैर्यादृते मनुजः कार्येषु विमुह्य विषीदति तदवलम्ब्य तु सुखेन कार्यस्यान्तमधिगच्छति, दृश्यतां, लङ्कां प्राप्तो वातात्मजो महावीरो रात्रिं यावज्जनकात्मजां मार्गमाणोऽप्यलब्धमार्गोऽधैर्येण निर्विण्णः परं विषाद-मापेदे। यथा :—

"दृष्टमन्तःपुरं सर्वं दृष्टा राक्षसयोषितः।
न सीता दृश्यते साध्वी वृथा जातो मम श्रमः॥

पुनश्च—

"गत्वा तु यदि काकुत्स्थं वक्ष्यामि परुषं वचः।
न दृष्टेति मया सीता ततस्त्यक्ष्यति जीवितम्॥"

इत्यादिना क्रमेण लक्ष्मणभरतराजमात्रादीनां विनाशे स्वात्मानमेव कारणमुत्प्रेक्षमाणो महतीं विपत्तिं स्वचक्षुर्भ्यां द्रष्टुमक्षमः प्राणाँस्त्यक्तुं व्यवस्थितः—

"सागरानूपजे देशे बहुमूलफलोदके।
चितिं कृत्वा प्रवेक्ष्यामि समिद्धमरणीसुतम्॥"

अथ धैर्यं दधानो मृत्युजीवनयोस्तारतम्यं विमृश्यावोचत्—

"विनाशे बहवो दोषा जीवन् भद्राणि पश्यति।
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति संगमः॥"

इति धैर्यपोतेनैव मृत्युविपत्सागरं तीर्णवान्।

पश्यता भारतीया आर्यललनाः सुदुःसहं स्वपतिपुत्रादिवियोग-दावानलं धैर्यवारिदवारिणैव शमयन्ति। रावणेन शतयोजनस्य सागरस्य पारं नीता लङ्काया अशोकवाटिका-शिंशपातरुतले समुपविष्टा पतिव्रतानामग्रणीर्भगवती जनकात्मजा सर्वदा करालदंष्ट्राभी राक्षसीभिः परिवृता न कदापि स्वप्रियस्य रामस्य लक्ष्मणस्य वा वार्तामपि शृणोति। पञ्जरेऽवरुद्धा कुररीव बहुधा विलपन्त्यपि न कस्यापि दयार्द्रं भावं पश्यति। समये समये च रावणेन त्रिविधैः प्रलोभनैः प्रलोभ्यमानाया अपि सीतायाः स्ववंश-स्मरणपूर्विका धैर्योक्तिः कं न रोमोद्गमं विधत्ते, यथा :—

"स्नुषा दशरथस्याहं शत्रुसैन्यप्रतापिनः।
दुहिता जनकस्याहं वैदेहस्य महात्मनः॥
उपधाय भुजं तस्य लोकनाथस्य सत्कृतम्।
कथं नामोपधास्यामि भुजमन्यस्य कस्यचित्॥"

रावणेन बहुधा मृत्युत्रास आपाद्यते, राक्षसीभिरप्येकतस्तर्ज्यते

रामेण वियुक्तायास्त्रिचतुरा मासा व्यतीताः, असह्यं विरहदुःखम्, स्वकीयः कश्चिदपि नावलोक्यते, दविष्ठो देशो विकटश्चाध्वा, दिनव्यतियापन-साधनमेकतरमपि न पश्यति कथमिव दुःसहा विरहव्यथा शान्तिमुपगच्छेदिति परं विषादमुपगता रात्रौ वियति देदीप्यमानं सुधाकरमप्यऽग्निपिण्डं मन्यमाना—

"चन्द्रहास ! मम हर परितापं रघुपतिविरहानलसञ्जातम् ।"

इति रावणखड्गं प्रार्थयमाना प्रतिदिनमेधमानं विरहवह्निं धैर्यवारिणेव शमयति स्म। भवति हि धैर्यशृङ्खलासन्नद्धमेव वियोगिहृदयम्। अन्यथा विरहाग्निदन्दह्यमानमेतत् शतधा विदीर्येत।

शत्रुभिरपहृतराज्योऽपि भूमिपतिर्यदि धैर्यं दधानः पुनः स्वशक्त्युपचयाय प्रयतेत, तर्हि कियता कालेनैव पुनः स्वाधिकारं लभते। दृश्यतां महाराष्ट्रराजो वीरवरः शिववीरो यवनराजापेक्षयाल्पबलोऽपि समस्त-भारतीय-वीरपुङ्गवैर्जयसिंह-यशस्विसिंहादिभिः शिरोधार्यशासनेन दिल्लीश्वरेण यवनसम्राजा अवरङ्गजीवेन कोङ्कणदेशशिरोरत्नायमाने सदाभिरामैर्गृहारामै रमणीये पुण्यनगरेऽपहृतेऽपि यवनवशंवदतामनंगीकुर्वन् धैर्येण कालं प्रतीक्षमाणस्तत्समीपवर्तिनि सिंहदुर्गे स्वसैन्यसंघटनतत्पर एवोवास। ततोऽचिरेणैव धैर्यधारिधौरेयैः परिगणितैः कतिपयैरेव सहचरैः परिवृत एकस्यामेव रात्रौ समस्तं पुण्यनगरं सप्रान्तं विजिग्ये। अथ कदाचित् जयसिंहाशीविषमन्त्रफूत्कारेण कर्णे स्पृष्टः कार्याकार्यमजानन् दिल्लीश्वरेण सन्धातुं दिल्लीं ययौ, तत्रैव ससहचरो रिपुणावरुद्धो धैर्यदत्त-प्रतिभा-सहकारेण मिष्टान्नभाजने निलीय दिल्लीतो निर्गतो धैर्यतरण्येवापदं; तरण्या यमुनां निस्तीर्य स्वात्मीयैर्गुप्तः स्वर्गग्रहोदरं स्वं देशं प्रत्यापद्यत।

एवमपरोऽपि धैर्यधारिधुरन्धरो भारतभूषण उदयपुराधीश्वरो मेवाड़पुरन्दरो महाराणा-प्रतापो यवन-राजाकबर-प्रेषितेन मानसिंहेन युध्यमानो हल्दीघाटीसमराग्नौ सर्ववीरेषु वीरगतिं गतेषु परहस्तगते च मेवाड़राज्ये यवनवशंवदतामनंगीकुर्वन् सपरिवारो वनं विवेश। वने च विविधान् शीत-वातातप-क्षुत्पिपासादि-क्लेशान् सहमानो घासरोटिका-

मप्यलभमानायाः पुत्र्या भार्यायाश्च दीनां दशां निरीक्षमाणः खड्गदोः-सहायो धैर्येणैवापद्दिनानि निनाय। पुनरपि श्रेष्ठिभामाशाहदत्त-साहाय्येन वीराणां सङ्घटनं विधाय मेवाड़-स्वातन्त्र्यं रक्षन्नात्मसम्मानं जुगोप।

कैव कथा सांसारिकपदार्थानां कृते सप्रयत्नानां, परमात्मसाक्षात्काराय प्रयतमाना योगिनोऽपि मोहाद्यावर्त-शताकुला योगान्तराय-विपन्नदीस्तरीतुं धैर्यतरणीमेवापेक्षन्ते। परमात्म-प्राप्त्युपायत्वादेवास्य दैवी-सम्पत्सु परिगणनम्।

यथा गीतायाम्—

"तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीमभिजातस्य भारत॥"

दृश्यताम्—चक्षुः-श्रोत्र-घ्राण-रसनत्वगादीनि दशेन्द्रियाणि आत्म-साक्षात्काराय प्रयतमानं योगिनं स्वविषयविपन्नदीं प्रति कर्षन्ति, आयुषोऽल्पत्वात्करालदंष्ट्रं मुखं व्यादाय मृत्युरप्येनमेकतो जिघत्सति। व्याधिस्त्यानसंशयाद्या योगान्तराया विपदोऽपि प्रतिक्षणं प्रतिरुन्धते, लक्ष्यं दृश्चिष्ठं विकटश्चाध्वा, एवमापत्पयोधौ निमज्जतो योगिनो धैर्य्यतरणिरेव केवलं निस्तारिणी। धैर्यतरणीमारूढोऽसौ दोषदर्शनेन विषय-विपन्नदीं, परमात्मोपासनया च व्याधि-स्त्यान-संशयादि-योगान्तराय-तरङ्गिणीञ्च गोष्पदमिव निस्तीर्य परमात्मसाक्षात्काराय कल्पते। अत एव मनुना दशके धर्मलक्षणेऽभ्यर्हितत्वाद्धैर्यस्यैव प्रथमतो निर्देशोऽकारि। यथा—

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्"॥

किञ्च अहिंसाव्रतिनोऽपि भारतीया नेतारश्चिरेण भारतभूस्वातन्त्र्याय प्रयतमाना विदेशीयैः साम्राज्यवादिभी राजभिर्भुशुण्डीलक्ष्या अपहृत-सम्पदो वाग्यामा असाधनाश्च विधीयन्ते। नैषां कोऽपि स्वतन्त्रो देशः सहायकः, असुतृपो विलासिनो भारतीया अधिकारिणोऽपि स्वेन्द्रियप्रीतये साम्राज्यवादिनामेव पृष्ठपोषकाः, कारागारनिक्षेपनिर्वासनादिना पदे पदेऽसफलतां नेनीयमाना अपि कस्य साहाय्येन व्यवसितं निर्वहन्तीति

विचारमार्गप्रहितेन चेतसा धैर्यमेवैषामनिर्वेदहेतुः प्रतिभाति। धैर्यकार्यमनिर्वेद एवासफलस्य जन्तोः सर्वार्थप्रवर्तकः सिद्धिश्च स्मर्यते—

"अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम्।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः॥
करोति सफलं जन्तोः कर्म यच्च करोति सः"।

यदि युधिष्ठिर – सीता – प्रताप – प्रभृतयोऽधैर्येण निर्विण्णाः स्वकार्याद् व्यरंस्यन् तर्हि न तेषां नामापि केनचित् समादरेणाऽग्रहीष्यत। धनुर्विद्यामर्मज्ञस्य बलवतोऽश्वत्थाम्नोऽधीरत्वादेव न कुत्रापि पराक्रमोऽश्रावि ऋते सुप्तबाल-हननादेः कुत्सितात्कार्यात्। अद्य भारतमपि धैर्याभावादेव—

"स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वधर्मे निधनं श्रेयः परधर्मो भयावह"॥

इति भगवद्वाक्यं विस्मृत्य क्षणिकां पर-धर्म-कर्म-व्यवसायादेरुन्नतिं वीक्ष्य निजार्यवैदिक-धर्मादेर्वर्णोचित-व्यवसायादेर्लक्ष्म्याश्च हीयमानं विद्यते।

यतो धैर्येणैव-इन्द्र-हनुमत्-प्रमुखा देवाः, युधिष्ठिरादयो राजर्षयः सीताद्याः पतिव्रताः स्त्रियो योगिनश्चापदां सागरं समुत्तीर्णाः। यतश्च धैर्यमेव गुणानां निदानं, धीराणां जीवनं, सम्पदां मूलं, विपत्पयोधीनां पोतः, महत्त्व-प्रासादमारुरुक्षतां नीतिज्ञानां नीतिः, समरसागरमुत्तितीर्षतां वीराणामुत्साहतरणिः, दारिद्र्यमेघप्रभञ्जनानां व्यवसायिनां व्यवसायसरणिः, रोगग्राहग्रस्तानां रोगिणामाश्वासनं शोकातुराणां शोकापनोदहेतुः, परीक्षा-पर्वतमारुरुक्षतामन्तेवासिनामवलम्बनम्। बह्वन्तराय-कृषिजीविनां कृषकाणामुत्साहबीजम्, निःसहायानामसाधनानां निजमातृभूमि-पादार्पितजीवनानां दुःखबहुलेषु कारागारनैमिषारण्येषु रात्रिन्दिवं तपस्यतां भारतीयानामनिर्वेदः। तस्मात्सर्वथा युक्तमिदमुच्यते—

"आपदां तरणिर्धैर्यम्" इति

## ( १७ ) "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः"

### ( ले० आचार्यः श्री पं० चूडामणिशास्त्री विद्यानिधिः )

[ उद्योगविषयकोऽयं सरलतरः प्रस्तावः। साधु विवेचितो विषयोऽयं पण्डित-चूडामणिना लेखकमहाभागेन। वस्तुत उद्योगस्य महीयान् महिमा वाचामगोचरो नाम। सर्वं जगच्चक्रम् उद्योगेनैव चलति। सर्वैः सदा आत्मकल्याणाय उद्योग आश्रयणीयः ]

सकलब्रह्माण्डं व्याप्नुवता परमेश्वरेण योऽयं संसारो व्यरचि तत्र सर्वभूत-जातमुद्योग-समुपेतमसौ निरमासीत्। यदि तेन पृथ्वी निर्मिता, तर्हि सा चक्रवद् भ्रमन्ती (अर्थात्-उद्योगं कुर्वाणा। वसन्त-ग्रीष्मादीन् ऋतून् रचयितुं प्रभवति। सूर्यो यदि निर्मितस्तर्हि सोऽपि द्वादशराशिषु बभ्रम्यमाणो जगदखिलं प्रकाशयितुं प्रभवति। वायुरपि चङ्क्रम्यमाणः सकल-जीव-जीवन-निमित्तं सम्पद्यते। जलमपि नदीनदादिरूपेण भूमण्डलं परिभ्रमज्जगत्कार्याणि विधत्ते; कृषि-सस्य-फलादिनिष्पत्तिं करोति; मानवीय-जीवनरक्षाञ्च सम्पादयितुमीष्टे। ग्रहगणोऽपि नूनं कस्मैचन महते प्रयोजनाय बम्भ्रमीति। किं बहुना जगदखिलमुद्योगपरायणमेवाक्षिलक्ष्यीभवति। साक्षात् परमेश्वरोऽपि सृष्टेः प्राग् यदाऽऽसीदेकाकी, असौ एकत्वादु-दासीनो जातः, तत्रभवता वेदेन प्रत्यपादि "एकाकी न रमते" इति स्वात्म-विनोदाय तेन सङ्कल्परूपमुद्योगं विधाय "एकोऽहं बहु स्यां प्रजायेय" सृष्टिरियं समुद्भाविता। यस्य सर्गस्य मूलभूतः सङ्कल्पोऽपि उद्योगरूपो-ऽस्ति, तत्र सकला सृष्टिरुद्योगशीला स्यादित्यत्र तु किमु वक्तव्यम्।

मानवस्य पशु-पतत्रि-प्रभृतीनाञ्चाङ्गप्रत्यङ्ग-निर्माणमपि उद्योगमेव पुष्णाति। तथाहि—

मानवस्य पादौ भ्रमणरूपोद्योगाय, चक्षुश्च दर्शनोद्योगाय, कार्य-सम्पादनोद्योगाय च, अथ हस्तौ ग्रहणोद्योगाय, एवं शेषेन्द्रियाणामपि प्रयोजनं प्रत्यवसेयम्।

सिंहो यदि पञ्चास्यः कृतस्तर्हि मृगयायै उद्यन्तुमेव। श्येनो हि पतत्री स्वपतत्र-बलेनैव स्वजीविकामुपलब्धुमलम्। तस्माद् यस्य जीवस्याङ्ग-

प्रत्यङ्गनिर्माणमपि-उद्योगनिष्पत्तये जातं तत्र तदीय-जीवनोद्देशो यदि स्यादुद्योगमयस्तर्हि किमाश्चर्यम्—

पुमान् यदि अपथ्य-सेवनवशाद् रोगभाग् भवति, तर्हि—औषध-सम्पादनायोद्यच्छमान एव स्वकीयं रोगं दूरीकर्तुं प्रभवति। चेत् कश्चन नदीं नदं समुद्रं वा तरीतुकामो विद्यते तर्हि पोत-प्रवहणादिनिर्माणोद्योगेन साफल्यमुपसीदति। तत्र दैवं दैवमिति सहस्रकृत्वो जपित्वाऽपि न प्रभुः पारमुपसत्तुम्।

यदि कश्चनात्मानमात्मजान् वाऽऽत्मीयान् वा शीत-वातातपेभ्य-स्त्रातुं तस्कर-दुर्वृत्तेभ्यश्च परिशिक्षितुमभिलषति, तर्हि-उद्योगेनैव स्वीय-निकेतननिर्माणाय प्रभवति।

स्वकुटुम्ब-भरणाय यदि कश्चित् सफल उपायो विद्यते तर्हि उद्योग एव। नैनमन्तरा स्वासनमध्यासीनायोदासीनाय कश्चिदुपस्थापयति कुटुम्ब-पालन-सामग्रीम्। अन्यथा सर्वे ग्रामान् विहाय श्मशानस्थले एवोपतिष्ठेरन्।

एको दैववादी श्वभ्यो भोजनं ददानं कञ्चन साक्षात्कृत्येति निश्चि-काय–यत् यद्देवः श्वभ्यो ददाति तन्मह्यं न दास्यति? इत्थं निश्चिन्वानः तस्मिन् मार्गेऽग्रतः स्थितः सन् भोजन-भोजकस्य प्रतीक्षां चक्रे। आगते तस्मिन् तस्मै चादत्त्वैव गन्तुकामे सति स तमाहूयोक्तवान् "श्वभ्यो ददासि मह्यं न ददासि अहमेभ्योऽपि निकृष्टतमः किम्?" स तु तमुवाच। भो दैववादिन्! परान्नभोजिनः शुनः सम्मुखे सुशान्ततया समुपस्थापयसि उद्योगशीलम्। अत एव स्वात्मानं पालयित्वा परान् पोषयितुं प्रवृत्तं लोचन-गोचरीकरोषि माम्? इत्याकर्ण्यासौ दैवं विहायोद्योग-पक्षमभ्युज्जगाम।

यदि कश्चित् परीक्षार्णवमुत्तरीतुमना वर्तते, तर्हि तेनोद्योगसाहाय्ये-नैवार्णवोऽयं सुतरः सम्पाद्यते। तत्र दैववादिनस्तु—"इत्थं व्याहरन्ति "शक्ष्यामि कर्तुमिदमल्पमयत्नसाध्यम् अत्रादरः क इति कृत्यमुपेक्षमाणः" तर्हि तत्फलं कीदृक् निस्सरति, तच्छ्रूयताम्—

"केचित् प्रमत्तमनसः परितापदुःखमाप्तं प्रसङ्गसुलभं पुरुषाः प्रयान्ति" तस्मादुद्योगपरायणः पुमान् स्यात्।

यदि कश्चित् सांसारिकान् सुखभोगान् स्वजीवनलक्ष्यीकरोति, तर्हि प्रकामोद्योगपरेण तेन भाव्यम्। यदि वा भुक्तिं विहाय मुक्तिरेव स्वाभिलाषवर्त्मनि तेन स्थापिता तर्हि योग-समाधिषूद्यच्छमान एव साफल्य-मुपसर्तुं क्षमतेऽसौ। यदि तेन भुक्तिमुक्ती-अतिक्रम्य जनता-जनार्दनस्य सेवा स्वकर्तव्यतया स्थिरीकृता, तर्हि उद्योगपरायणो भूत्वाऽसौ परकीय-दुःखदाव-दलनं कर्तुं प्रभवति नापरथा। श्रीनारदीये परोपकारकर्मणि प्रसन्नतामावहता भगवता विष्णुना यदा भक्तोऽसौ शत्रुपराजयायामर्त्य-राज्याय अथ च मोक्षसुखाय प्रलोभितः, तदाऽसौ सेवाभावं स्वीयलक्ष्यं स्थिरीकृत्य व्याहार्षीत्—

"न त्वहं कामये राज्यं न स्वर्गं नापुनर्भवम्।
कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्॥"

केचिद् दैवपक्षपातिनो व्याहरन्ति। "यादृशं दैवं सम्पद्यते पुमाँस्तादृशं फलमासादयति—उद्योगं विनाऽपि एको जनो धनाढ्य-निकेतने समुत्पन्नः, स च विनैवोद्योगेन धनैर्धनसाध्यैश्च पदार्थैः प्रतिदिनं क्रीडति। अपरश्च रङ्कगृहे जायमानः प्रभूतान् सुखसम्पादकानुद्योगान् कुर्वन्नपि भोजनाच्छादनादिकं कपर्दिकामात्रमपि नोपलभते धनम्। केवलं चिन्तापरायण एव यापयति जीवनमिति"।

तत्रोत्तरमिदम्—किं नाम दैवम्? परमेश्वरेण स्वेच्छयैव तौ पूर्वोक्ता जनौ सधन-निर्धन-निकेतने उत्पादितौ केनापि हेतुना वा? आद्ये स्वेच्छया फलानि ददानः परमेश्वरः प्रमत्त इव व्यवह्रियेत। निर्धनः पुमान् परमेश्वरं वक्ष्यति—मया किमपराद्धं, यन्मां रङ्कीकृतवानसि? तदा परमेश्वरोऽपि प्रतिपादयिष्यति—भो रङ्क! मदीयेच्छैव प्रधानम्, यदहं जीवयानि व्यापादयानि वा, न कोऽपि मां निरोद्धुं प्रभुः। अस्मिन्नुत्तरेऽवश्यमसौ प्रमत्त इव विक्षिप्त इव मंस्यते मानवैः।

परन्तु यदि तयोः पूर्वकृत-सुकृत-दुष्कृतानुकूल्येनैव फलदायकः परमेश्वरस्तर्हि रङ्कस्य कोऽपि नोपालम्भावसरः। यतो यादृशमुप्तं तादृशं लब्धम्। एवं सति जना यद्दैवं व्याहरन्ति तदपि वास्तविकदृष्ट्या उद्योग एव। अत एव वेदेऽपि फलभोगवेलायां पुमान् यदि दुःखितो-

ऽस्ति, तर्हि स्वकीयं कर्मैव स्मरतु, परमेश्वरः कदाचनापि नोपालभ्यताम्! इति प्रतिपादितम्—

"ॐ क्रतो स्मर कृतं स्मर" इति। अर्थात्—हे क्रतो! कार्यकर्तः! जीव! त्वं कृतं स्मर = स्वकृतमुद्योगं स्मर। नोपालभस्व परमेश्वरम्, प्रत्युत—अग्रे पुण्यसञ्चयं ओं स्मर। अर्थात्—परमेश्वरं चिन्तय प्रार्थय सुकृत-सम्पादनाय। तस्मात् वेदेऽपि कर्ममहिमा वोद्योगमहिमा वा प्रकाशितः। न क्वचिदपि दैवं स्तुतिभाजनं कृतम्।

अत एव—"पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते।" इति दैव-लक्षणं कोविदैः कल्पितम्।

किंच यदि दैवमेव स्वेच्छया स्यात् प्रबलम्, तर्हि वर्तमान-कालिक उद्योगो व्यर्थोऽस्ति, तर्हि शास्त्रैः किमर्थो व्यर्थो विषयः प्रतिपादितः उद्योगो नाम, कथं वा धनव्ययः परिश्रमः समय-व्ययश्च तैः शास्त्रकारै-रस्माकं व्यर्थीकृतः? को हि नाम चेतनावान् सन् व्यर्थं किमपि कार्य्यं सम्पादयितुमीहते। श्रीरामचन्द्रः सीताहरणवेलायां "दैवेनापहृता सीता" इति मन्वानः कथं मौनीभूय नातिष्ठत्? परं नायं सिद्धान्तः श्रेयान्। दैवं तु—अस्मदधीनमपि न वर्तते अस्माकमधीनस्तु—उद्योग एव। को नाम ज्ञानवान् भूत्वाऽपि उद्योगं विहाय पराधीनं दैवं प्रधानीकृत्य तदा-देशानुसारेण जीवति। को वा रोगभाग् भूत्वा "दैवफलमिदम्" इति निश्चित्य हस्ते हस्तं स्थापयन् तिष्ठति? कथं जानाति पुमान् यदयं दैव-वशात् रोगो जातः, अतोऽवश्यमुपरंस्यते, कोऽर्थं औषधसेवनेन? यद्यस्य भागधेयेषु जीवनसुखं भवति तर्हि रोगभागेव कथं सम्पत्स्यते, इत्थं निश्चिन्वानः क उपरमति स्वीयोद्योगात्। उपरमेच्चेत्तर्हि 'मूर्खोऽयं विक्षिप्तोऽयमिति व्यवह्रियेत सकलजनैः।

अस्मादस्माभिः सदोद्योगपरायणैर्भाव्यम्। परमेश्वरेणास्माकं हस्ते उद्योग एवार्पितः, दैवं तु तेन स्वायत्तीकृतम्। परायत्तपदार्थे पुनः पुनः प्रचलन् पुमान् परपुरुषैः प्रकामं प्रमादी प्रतिपादयिष्यते। अत एव श्रीमता मर्यादापुरुषोत्तमेन भगवता रामचन्द्रेणोद्योगबलेन सुग्रीवः

सुहृत् कृतः। लङ्कामुपसाद्य सह लक्ष्मणेन सकलजगद्रावणं रावणं पुरन्दर-पुरातिथीकृत्य सीता समासादिता। उद्योगसाफल्यञ्च प्रकाशितम्।

यदा नलो भूपालः स्वीयेन कनीयसा भ्रात्रा सह दीव्यन् स्वीयं, राज्यं हारितवान्। तदा तदुद्योगमकृत्वा दमयन्तीं सह नीत्वा वने वने भ्रान्तवान् श्रान्तवान्। अन्ते च स्वप्राणभूतां दमयन्तीमपि त्यक्तवान्। सर्पेणापि दष्टः। दैवानुसारी भूत्वा प्रभूतानि कष्टानि अनुबभूव। परं यदोद्योगं विधाय ऋतुपर्णस्य राज्ये भृत्यकल्पमङ्गीचकार, तदा पुन-र्भीमभूपेन दमयन्ती-जनकेन स्वयंवरे स्थापिते सति तत्र ऋतुपर्णेन सहोपसद्य पुनर्दमयन्तीमुपलब्धवान्।

दैवाधीनजीवनस्तु पदे पदे प्रस्खलति, अन्ते पञ्चतामञ्चति। किन्तु वशीकृतोद्योगस्तु सर्वत्र विजयमुपढौकते। तथा चोक्तम्—

"न चोद्योगमनारुह्य नरो भद्राणि पश्यति।
उद्योगं पुनरारुह्य सुखं जीवति हृष्यति॥"

दशरथो हि यावद्दैवाधीनो जातः, तावत् स्त्रीत्रये सत्यपि सन्तानहीन एव तस्थौ। परं यदा गुरुवशिष्ठसम्मत्या पुत्रेष्टिं चकार, तदा न केवलमेकं पुत्रमपि तु तिसृभ्यो महिषीभ्यः पुत्रचतुष्टयमुपलब्धवान्। उद्योगफलं तु दुर्निरोधं ब्रह्मणाऽपि।

पाण्डवा ह्युद्योगबलेनैव नष्टमपि राज्यमुपलब्धवन्तः। लाक्षानिकेतने दह्यमाने सति ते उद्योगबलेनैवात्मानं त्रातुं प्रबभूवुः।

दैवानुसारी अर्जुनः श्रीकृष्णोद्योगबलेनैव पुनर्गाण्डीवमुत्तोलितवान्। श्रीमता कृष्णेन हि स्वगीतायां स्पष्टं प्रतिपादितम् "कुरु कर्मैव तस्मात्त्वं कर्म ज्यायो ह्यकर्मणः" इति तेन संन्यासिनां योगिनां च कृतेऽपि कर्ममार्ग उद्योगमार्गो वा प्रकाशितः सम्यक्—

"अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः।
स संन्यासी स योगी च न निरग्निर्न चाक्रियः॥"

तस्मादुद्यच्छमान एव पुमान् स्वाभीष्टं लब्धुमर्हति नापरथा। अत एवोक्तम्—"उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः"।



## ( १८ ) विद्याधनं सर्वधनप्रधानम्

( ले० श्री पं० कृष्णदेव उपाध्यायः एम० ए० साहित्यशास्त्री )

[ प्रस्तावोऽयमतिसरलः, प्राथमिकलेखकानां कृते परमोपयोगी। वस्तुतो विद्यैव सर्वोत्तमं धनं, यस्या उपार्जने कृते मानवजीवनं सर्वथा कृतकृत्यं जायते, परमपुरुषार्थस्य मोक्षस्याप्ययमेव हेतुः। विद्याविहीनः पशुः; विद्वान् एव जगति वास्तविको धनी, यः, सर्वत्रापि पूज्यते आद्रियते सुखं परमसुखं परमानन्दं च लभते। सर्वमिदमत्र विदुषा लेखकेनातिसरलया परिपाट्या प्रतिपादितं दृश्यतां स्वयमेव ]।

सर्वशक्तिमता भगवता जगति समुत्पादितेषु द्रव्येषु विद्या नाम द्रव्यं सर्वश्रेष्ठं सर्वप्रधानं च वर्तते। मनुष्येभ्यो विद्याया अतीवाऽऽवश्यकता वर्तते। यः पुरुषो विद्याविहीनोऽस्ति स असभ्यः ग्रामीणः, मूर्खः, निरक्षरभट्टाचार्यः इत्याद्यनेकैरुपाधिभिर्विभूष्यते जनैः। किं बहुना साहित्यसंगीताभ्यां विरहितस्य पुरुषस्य तु साक्षात्पशु नाम कृतं श्रीमता भर्तृहरिणा। तेन यदुक्तम्—

साहित्यसंगीतकलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमानस्तद्भागधेयं परमं पशूनाम्॥

तत्तु समीचीनं प्रतिभाति। यथा पशुर्ज्ञानेन विना धर्माधर्मयोर्विचारं न कर्त्तुं प्रभवति तथैव मनुष्योऽपि विद्यया विरहितः कर्त्तव्याकर्त्तव्ययोर्विवेकं कर्त्तुं न शक्नोति। यथा पशूनां जीवितमाहारनिद्राभयमैथुनैः नितरां व्यस्तं वर्तते। तथैव मूर्खस्यापि जीवनमस्ति। विद्यैव पशुमनुष्ययोः भेदबुद्धिमुत्पादयति। सम्यगेवोक्तं केनापि कविना यत्—

आहारनिद्रा-भयमैथुनञ्च, सामान्यमेतत्पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो, धर्मेण हीनाः पशुभिः समानाः॥

को धर्मः; कोऽधर्मः इति विद्ययैव ज्ञातुं शक्यते। अत एव विद्याविरहितस्य पुरुषस्य तुलना पशुनातीव समीचीना वर्तते। मूर्खस्य जीवनं

व्यर्थमेव। यतः स न किमपि कार्यं कर्त्तुं प्रभवति। विद्वद्भिस्तस्य निरादरः क्रियते, जनैः स उपहस्यते, विचारशीलैर्नाद्रियते। स तु धराया भारभूत एव तिष्ठति।

शुनः पुच्छमिवव्यर्थं जीवनं विद्यया विना।
न गुह्यगोपने शक्तं न च दंशनिवारणे॥

अतएव विद्यया विहीनः पशुः इति भाषितं निश्चितमेव सुभाषितं प्रतिभाति।

"विद्याधनं सर्वधनप्रधानं" यदुक्तं तत्र को हेतुः? तदुच्यते—विद्याधनस्य सर्वश्रेष्ठेयं विशेषता वर्तते यत् सर्वं धनं व्ययात् क्षयमायाति, नाशं प्राप्नोति परन्तु वीपरीतमस्माद् विद्याधनं सञ्चयात् क्षयं गच्छति, व्ययाच्च वृद्धिमायाति। कुबेरस्याऽपि असंख्यः कोशो व्ययात् निश्चितमेव कस्मिंश्चिद् दिने रिक्तो भविष्यति। परन्तु अहो विशेषता विद्याधनस्य यदिदं मुहुर्मुहुर्व्ययमापन्नमपि नैव नाशं प्रयाति। केनाऽपि कविना सम्यगेवोक्तं यत्—

अपूर्वः कोऽपि 'कोशोऽयं, दृश्यते तव भारति!।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात्॥

द्वितीया विशेषताऽस्य विद्याधनस्येयमस्ति यदिदं धनं न केनाऽपि चोरयितुं शक्यते। अत्यन्तनिपुणा अपि चौराः विद्याधनं कौशलेनाऽपि चोरयितुं न शक्नुवन्ति, परन्तु तेऽन्यधनं लीलयैव हर्तुं पारयन्ति क्रूरोऽपि राजा विद्याधनं हर्तुं न प्रभवति। धनमिदं तस्याऽधिकारस्य नाऽस्ति विषयः। न कोऽपि विद्वान् पण्डितो राजाज्ञया विद्याविरहितः कर्तुं पार्यते। विद्याधनं भ्रातृभाज्यमपि नाऽस्ति। भ्रातरो विद्याधनं न विभक्तुं प्रभवन्ति। यतो कुक्षिस्थिता विद्या न विभागकरणस्य विषयः। अतो भ्रातृणां मध्ये धनविभाजन-समये विद्याया विभाजनं नैव क्रियते। धनस्य राशिर्भारयुक्तो भवति। न च लक्ष्यसंख्यकाः किंवा दशसहस्र-संख्यका रूप्यका अत्यन्तश्रमोत्पादकत्वात् भारकरणाच्च केनाऽपि दूरं वोढुं पार्यन्ते। परन्तु विद्याधनं न कदापि भारकारि भवति। न कोऽपि महामहोपाध्यायः समधिक-विद्याऽध्ययनकारणेन केनाऽप्यन्येन पुरुषेण

सह तुलायां गुरुतां प्राप्नोति। न च सर्वतन्त्र-स्वतन्त्रः कोऽपि षट्शास्त्री स्वागाधपाण्डित्येन मार्गमटितुं श्रममनुभवति। अस्माकं कथनस्यायमेवाऽभिप्रायो यद् विद्याधनं न कदापि भारं करोति। उक्तञ्च केनाऽपि सुमतिना—

"वसुमतीपतिना न सरस्वती, बलवता रिपुणाऽपि न नीयते।
समविभागहरैर्न विभज्यते विबुधबोधबुधैरपि सेव्यते"॥

तथाच—

"हर्तुर्न गोचरं याति, दत्ता भवति विस्तृता।
कल्पान्तेऽपि न या नश्येत्, किमन्यद् विद्यया समम्"॥

विद्या मनुष्यस्य सदा सहचरी वर्तते। तस्य विविधेन प्रकारेणोपकारं करोति। विद्या मनुष्यं मातेव रक्षति। यथा माता बाल्यकाले स्वशिशून-बोधबालकान् व्याधिभ्यो रक्षां करोति, तथैव विद्याऽपि अनुभवशून्यस्य जनस्यानेकापद्भ्यस्त्राणं करोति। विद्या पितेव हितकार्ये मनुष्यं नियोजयति। यथा पिता स्वपुत्रं कुशलता समन्विते हितकारके च कार्ये प्रेरयति तथैव विद्याऽपि मनुष्याय कर्तव्याऽकर्तव्ययोर्ज्ञानं ददाति। येन ज्ञानेन प्रेरितो मनुष्यो हितकारकं कार्यं करोति, अहितञ्च त्यजति, विद्या मनुष्यस्य शोभां विस्तारयति। राजसभायां विद्वानेव हि पुरुषः समादरं प्राप्नोति राज्ञा चाद्रियते।

विद्या मनुष्यस्य दिक्षु कीर्तिं विस्तारयति, सप्तसमुद्रपारमपि यशः प्रापयति। अधुनाऽपि यत् डा० रवीन्द्रनाथ ठाकुरः, सर राधाकृष्णः, सर वैङ्कटेशरमण-आचार्यरायश्च संसारप्रसिद्धाः पुरुषा वर्तन्ते भारते। तत्किं विपुलेन धनेन? उताहो प्रभूतेनाऽधिकारेण? नहि नहि विद्ययेव। कोऽधुना संसारेऽस्मिन् साक्षरोऽस्ति येन जगत्प्रसिद्धस्य स्वनामधन्यस्य रवीन्द्रनाथ-ठाकुरस्य नाम नैव श्रवणगोचरीकृतम्। कोऽस्ति खलु वैज्ञानिको यो "रमणं" न जानाति। अस्माकं कथनस्यायमेवाऽभिप्रायो यद् विद्यया जगति विपुलां कीर्तिं लभते मनुष्यः। विद्यायाः प्रशंसायां केनाऽपि समुचितमेवाऽभिहितम्—

मातेव रक्षति पितेव हिते नियुङ्क्ते ;
कान्तेव चाभिरमयत्यपनीयखेदम् ।
लक्ष्मीं तनोति वितनोति च दिक्षुकीर्तिं ;
किं किं न साधयति कल्पलतेव विद्या ॥

विद्यापठनेन मनुष्यो धनं प्राप्नोति, अतएव सुखं करोति। यदा मनुष्यो विदेशं गच्छति, तदा विद्यैव तस्य सहायतां करोति। अज्ञात-प्रदेशेऽपि यद् मनुष्यो गच्छति तत्तु विद्याबलेनैव। अधुनाऽपि वायुयानचालका निराधारे मार्गे यत् स्ववायुयानं चालयन्ति तदपि विद्याबलस्यैव प्रभावः किं बहुना सीमारहितेऽपि समुद्रे ये पोतं चालयन्ति तेऽपि पोतविद्ययैव तत्कार्यं सम्पादयन्ति। यथा पूर्वमेवोक्तं राजसभासु विद्यैव पूज्यते न धनम्। अतएव विद्याया सर्वथा सर्वदा चातीवाऽवश्यकता वर्तते। उक्तञ्च—

विद्या नाम नरस्य रूपमधिकं प्रछन्नगुप्तं धनम् ।
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः ॥
विद्या बन्धु-जनो विदेशगमने विद्या परं दैवतम्,
विद्या राजसु पूज्यते न तु धनं विद्या-विहीनः पशुः ।

चतुर्वर्ग-फलप्राप्तिरपि सुखाद् विद्ययैव संभवति। विद्या विनयं ददाति विनयेन च मनुष्यः पात्रतां याति, पात्रत्वाद् धनमाप्नोति। अतएव चतुर्वर्गस्य प्रथमो वर्गो धनरूपो (अर्थः) विद्ययैव लभ्यते। धनेन मनुष्यो दानं ददाति। धर्मशाला-निर्माणं, मन्दिराणां जीर्णोद्धारं, तीर्थाटनं, देवपितृपूजनादिकं पुण्यं कर्म करोति। अतएव धर्मस्य सञ्चयं करोति। उक्तञ्च— विद्या ददाति विनयं विनयाद् याति पात्रताम् ।
पात्रत्वाद् धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥

यथा धनेन धर्मः सञ्चीयते, तथा धनेनैव कामस्याऽपि प्राप्तिर्भवति। धनेन मनुष्यः सुधाधवलितं प्रासादं निर्मोति। जलक्रीड़ार्थं वापी-तड़ागादीनां निर्माणं करोति। नानाऽस्वादजनकानि भोजनानि भुङ्क्ते, बहुमूल्य-वस्त्राणि परिधत्ते। अनेन प्रकारेण तृतीयवर्गस्य कामस्यार्जनं करोति। विद्यया मनुष्यः आत्मपरमात्मनोरभेदं पश्यति। क्रमशः स ब्रह्म जानाति तथा तद् ज्ञात्वा तद्रूपो भवति। श्रुतिभिरपि प्रतिपादितं यत्

"ब्रह्मविद् ब्रह्मैव भवति" "ऋते ज्ञानान्न मुक्तिः"। अतएव मुक्तौ ज्ञानस्य परमावश्यकता वर्तते। अनेन विधिना मनुष्यो स्वजीवनस्य समग्रं फलं चतुर्वर्गाख्यरूपं अर्थधर्मकाममोक्षाभिधं विद्ययैव प्राप्नोति।

विद्ययैव कालिदास-भवभूति-जयदेवादयो महाकवयोऽअमरत्वं प्राप्नुवन्। तेषां कोमल-कान्तपदावली साम्प्रतमपि सहृदयानां कर्णकुहरेषु सुधाधारां वमति। अधुनाऽप्युदयनाचार्यस्य भारती-लालायते। भक्त-तुलसीदासस्य "भाखा" भणितमद्याऽपि भक्तितरङ्गिणीं प्रवाहयति। अतएव श्रुत्याऽपि तारस्वरेणोक्तं यत्—

"विद्ययाऽमृतमश्नुते" तथाच सत्यमेवैतत्—

'न चौरहार्यं न राजहार्यं न भ्रातृभाज्यं नच भार कारि।
व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्।"

[ निबन्ध चन्द्रिकान्तः ]

---

## ( १६ ) लोभाः

(ले० प्रोपाध्यायः श्री पं० साधुराम शास्त्री एम्. ए. एम्. ओ. एल्.)

"न लोभादधिको दोषः" "लोभः पापस्य कारणम्" महान् दुर्गुणोऽयं सर्वथा त्याज्यः। विषयोऽयमतिसरलया भाषया सम्यक् समालोचितः प्रण्डितप्रकाण्डेन लेखकमहाभागेन।

लोभो हि महान् रिपुः। प्राणिमात्रेऽस्य प्रभावो दृश्यते। निरपेक्ष-मानसाः साधवोऽपि बहुशोऽस्य प्रभावेण कार्याकार्यविवेकशून्या जायन्ते। धर्मादपि ग्लायन्ते, सर्वमनोरमां शान्तिमपि दूरत एव नमस्कुर्वन्ति। उक्तं हि—

लुब्धः कार्यमकार्यं वा न कीर्त्तिं निरयं न च।
न धर्मं चापि वाऽधर्मं वेत्ति नैव हिताऽहितम्॥

लोभो हि पापकारणम्। लुब्धो मनुष्यो बहुविधेषु पापकर्मसु प्रवर्तते। स्वाधिकारे पराधिकारे च विवेचनां नैव करोति। सर्वाणि वस्तूनि ब्रह्मणा

तद्धिताय सृष्टानि इत्येव जानाति। आत्मानं जगद्विभूतिकेन्द्रं मनुते लोभो हि कान्ताकनकादिगतभेदतो बहुप्रकारः। उक्तञ्च:—

"वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च"

तत्र बहुविधेषु लोभेषु सम्पत्तिलोभो हि बलवत्तमः। अन्योन्यराज्यं समीहमाना भूपतयः परस्परं कलहं कुर्वन्ति कोटिशः प्राणिनो निर्जीवान् विदधति। नगरं रिक्तीकुर्वन्ति, क्वचिद् दारानपहरन्ति, क्वचिद् गृहाणि अग्निसात्कुर्वन्ति। क्वचिन्निर्मलहृदयान् बालानपि ताडयन्ति। धनलोभात् मानवाः सहोदरानपि घ्नन्ति। कदाचिन्न्यायालयेऽभियोगं कुर्वन्ति। अद्यतनानां न्यायाधीशानां पञ्चाङ्गुलयो घृते जायन्ते। कायस्थानां सुप्रभातं भवति। परन्तु अभियोगकृतो "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति नियमानुसारेण न किमपि लभन्ते। निदानतः सन्धिपत्रमेव लिखन्ति। न्यायाधीशादयस्तु उत्कोचद्रव्यं लब्ध्वा स्वादुतया ताम्बूलं चर्वन्ति। धूम्रवर्तिकामाकर्षन्ति। कुप्रभावो लोभस्य।

अतिलोभेन क्षितीशो दुर्योधनोऽपि नाशमगमत्। लोभाभिभूतया सीतयोत्साहितो रामोऽपि सुवर्णमये मृगे लोभं चकार। उक्तं हि—

"असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय"

कैकेयी लोभात् तिरस्कारं लेभे। वाली भ्रातृराज्यलोभात् मनोरथशतैः सह परलोकं जगाम। बहूनि सन्ति वित्तलोभहानौ उदाहरणानि। परन्तु अतिविस्तरेणालम्। अत एकमेव श्लोकमुदाहरामः—

"निःस्वोवष्टिशतं शती, दशशतं लक्षं सहस्राधिपः।
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशवत्सम्पदम्॥
चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मत्वमाकांक्षति।
ब्रह्मा विष्णुपदं हरिर्हरपदं लोभावधिं को गतः॥

विषयलोभोऽपि महान् हानिकारकः। केचिज्जनाः सस्त्रीका अपि परकलत्रेषु लोलुपमानसा भवन्ति। उचितमनुचितञ्च सर्वं कर्तव्यमनुतिष्ठन्ति। परं न जानन्ति मूढधियो यत् भोजनं बुभुक्षानिवृत्त्यर्थं खाद्यते। यदि गृहस्थस्य भोजनेन बुभुक्षानिवृत्तिर्जायते तर्हि किमर्थमन्येषां भोज्येषु

गृध्नुता। "अर्के चेन्मधुविन्देत किमर्थं पर्वतं व्रजेत्" गृहागतं देवं नाराधयन्ति, मन्दिरे नत-मस्तका जायन्ते विवेकशून्यहृदयाः।

हन्त! केचिच्च स्वकलत्रेषु महतीं गृध्नुतामातन्वन्ति। इत्थं च भयङ्कर-व्याध्यधिष्ठानानि जायन्ते। उपदिश्यमानाः कदाचित् कथयन्ति यदल्प-कालेनैव विषयस्तृप्तमानसास्ते सर्वेभ्यो विषयेभ्यो विरंस्यन्ति, परन्तु एवं गदन्तस्ते वाक्यमिदं गणयन्ति।

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते"॥

अस्मिन्नेवार्थे कश्चिदन्योऽपि कविवर आह—

"धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु।
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्ति च"॥

न जातु विषय-विलासेन शान्तिर्लभ्या, एधोदानं हि स्मृतमेतत्। केवलो धर्मदण्ड एव विषयाद्दूरीकर्तुमीशः।

भोज्यपदार्थेषु लोभोऽपि दुःखकरः, एव। अद्यतना ब्राह्मणा अपि ये कदाचिद् भूसुरा आसन्। परान्नं निष्कारणमेव खादन्ति। "परान्नं दुर्लभं लोके शरीराणि पुनः पुनः" तेषां चारुर्वागस्ति। तेषां कृते सुसज्जित-मपि भोजनं लाभस्य स्थाने हानिमेव सम्पादयति। श्राद्धे क्षीरान्नं भुक्त्वा सायंकालपर्यन्तं हस्ताभ्यां मन्दं मन्दमुदरं परिमार्जयन्त उदरम्भरयोऽवश्य-मेव दर्शनीयाः।

यदि दानाध्ययनादि-पुण्यकर्मसु लोभः क्रियते स तु वरम्। यतो हि लोभात् तत्रोन्नतिं प्राप्नुवन्ति मानवाः। परन्तु विषय-विकारादिषु लोभस्तु सर्वथाऽवनतेरेव कारणम्। अतएव महाभारतेऽपि लोभनिन्दातिप्रबलतया क्रियते। उक्तं हि भीष्मपितामहेन—

"पापस्य यदधिष्ठानं तत् शृणुष्व नराधिप।
एको लोभो महाग्राहो लोभात् पापं प्रवर्तते॥"
"लोभात् क्रोधः प्रभवति लोभात् कामः प्रवर्तते।
लोभान्मोहश्च माया च मानः स्तम्भः परासुता॥"

अपिच—

"अत्यागश्चातितर्षश्च रूपैश्वर्यमदस्तथा ।
सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वनार्जवम्" ॥
"अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः ।
अविद्या प्रख्यता चैव सर्वं लोभात् प्रवर्तते" ॥

विद्यमानेषु एवं विधेषु प्रमाणेषु को नु नाम मन्दधीः लोभे प्रवर्तेत इति।

( प्रबन्धपथप्रदर्शकतः )

---

## ( २० ) "कः परः प्रियवादिनाम्"

### ( ले० आचार्यः स्व० श्री पं० रामचन्द्र शास्त्री कुशलः, बी. ए. )

कठोरभाषणेन प्रायः शत्रुत्वं वर्धते, स्वकीया अपि परे भवन्ति, तद् विपरीतं प्रियभाषणं परानपि स्वकीयान् करोति, अमन्त्रतन्त्रमिदं वशीकरणम् । विषयोऽयं रमणीयतरयाऽतिसरलया भाषया साधु समर्थितः पण्डितप्रकाण्डेन लेखकमहाभागेन ।

इह हि विलक्षणाकारे संसारे नास्ति स कोऽपि यस्य मित्रोदासीन-शत्रुरुपास्त्रयः पक्षा न विद्यन्ते । अत एव चाभणन्ति—

"मुनेरपि वनस्थस्य स्वानि कार्याणि कुर्वतः ।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥"

परं किमस्ति कोऽपि तादृशोऽगण्यपुण्यशाली यस्य सर्वे मित्राण्येव स्युः, यम्प्रति सर्वे स्निह्येयुरेव, येन सर्वे सहानुभूतिमेव कुर्युः, यं च सर्वे प्रशंसेयुरेव ? उच्यते—बाढम् अस्ति तादृशोऽपि । यतो हि वैचित्र्यपूर्णायां परमात्मसृष्टौ नास्ति किमपि दुर्लभम् ! स च-अमन्दा-नन्द सन्दोहनिःस्यन्दि-वचनामृतमन्दीकृताखिलतापः, प्रकटपुण्यकलापः, सर्वदा प्रसन्नचेताः, प्रफुल्लवदनः समस्तचेतः समाकर्षकः, अखिलप्रीतिभाजनम्, लीलालभ्य-सकलललितसौख्यः सर्वहितसंवादी, "प्रियवादी" एव । इदं ताव-द्विचार्यते—नहि सर्वं सर्वस्य प्रियं भवति, अपि तु यदेवैकस्य प्रियं भवति, अपरस्य तदेवाप्रियं भवतीति प्रियत्वाप्रियत्वयोर्न साधारणी स्थितिः ।

प्रियश्च तस्य तद् भवति—यद् यस्य मानसमकस्मादेव प्रमोदपारावारे निमज्जयति परमोत्कण्ठाश्रयं करोति, आकर्षति, नर्तयति चेति सहज मधुरया सुधाप्रवाहमिव सृजन्त्या वाचा यः सदा प्रियमेव भाषितुं धृतव्रतो भवति तस्यावश्यमेकोऽपि परो नावशिष्यते, प्रत्युत-औदासीन्यमपि विहाय सर्वे मित्रायन्ते वशवर्तिनश्च भवन्तीति सुधियाऽयत्नसाध्यं सर्वानन्दसाधनं प्रियभाषणमेवाश्रयणीयमित्यभिसन्धिः।

युक्तञ्चैतत्—तथाहि-इह हि द्विप्रकारा तावदस्ति-प्रियावाक् प्रथमा अर्थहीना केवलस्फोटात्मिका-यथा-कोकिलप्रभृतीनाम्, द्वितीया तु अर्थवती, यथा-मानुषाणाम्। तत्र विचार्यमेतद् यद् यदि ज्ञानशून्यानां कोकिलप्रभृति पक्षिणामपि अर्थहीनाऽपि च वाक् सहसैव सकलजनमनांसि रञ्जयति वशी करोति च, तर्हि उच्चैर्ज्ञानवतां प्रियभाषणशीलानां मानवानां प्रस्फुटार्थ-ललित-पद-कदम्ब-कलित-माधुरी-धुरीणा; सद्गुण-प्रकाशनप्रवीणा वाणी चेत्तथा विदधातीति किमेवाश्चर्यम्। किञ्च चञ्चलचेतसाम्, अधीरधियाम्, अशान्तस्वभावानां, परिकलितदुर्भावानां, निराकृतन्यायप्रबन्धानां, क्रोधान्धानामपि जनानां जनयति प्रियं वचश्चण्ड-किरण-तीव्रातप-ताप-संतापित-तनूनामनूनच्छायाशीतलं महामहीरुहतलमिव झटिति नितान्तमन्तःशान्तिम् .। नितान्त-चिन्तातान्तानामपि व्यपनयति विषादम् ! शुष्क-कलहलहलहायमान-खेदानामपि विनोदयति चेतः। गुरुकारणैरपि परस्परभिन्नान् सन्दधाति अमित्रानपि च परं मित्रायति। सुरूपं धनादिकं च कोऽपि न पश्यति परं यः पश्यति स सर्वतः प्रथममाचारव्यवहारौ वार्तालापक्रममेव च पश्यतीति सर्वथाऽऽलापो मधुरः प्रियश्च भवितुमुचितः। अप्रियन्तु वचो विस्मृत्यापि न प्रयोक्तव्यम्। यतो हि तदतीव दुःखप्रदं कोमले हृदि यावज्जीवमनपायिव्रणरूपतां धत्ते। अतएवाभणन्त्यभियुक्ताः—

"छिन्नं रोहति खड्गेन शरैर्विद्धश्च रोहति।
वचो दुरुक्तं बीभत्सं वाक्क्षतं न प्ररोहति ॥"

अन्यदपि—

"ब्रूतेऽप्रियं योऽत्र वचो विमूढधीर्न तद्वचः स्याद्विषमेव तद्वचः" इति।

एतावदेव न, किन्तु सत्यमपि चेदप्रियं भवेत्तर्हि कदापि तन्न वाच्यम्। अत एवोक्तमपि नीतिविद्भिः "सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति" इति। इत्थञ्च यत् परानपि लीलयैव स्वीययति, सर्वकार्याणि चानन्दसाधनानि साधयति तत्सुधास्वादु प्रियं वचः सर्वदा रसनासङ्गितां नेयमिति अतएवोच्यते नीतिविद्भिः—

"वाङ्माधुर्यान्नान्यदस्ति प्रियत्वं वाक्पारुष्याच्चोपकारोऽपि नेष्टः।
किं तद्द्रव्यं कोकिलेनोपनीतं को वा लोके गर्दभस्याऽपराधः॥"
"कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं कीर्तिं सूते दुष्कृतं या हिनस्ति।
ताञ्चाप्येतां मातरं मङ्गलानां धेनुं धीराः सूनृतां वाचमाहुः॥"

नैतदप्रत्यक्षं कस्यापि यत्—शुकसारिका प्रभृतयोऽरण्यवास्तव्या क्षुद्राः पक्षिणोऽपि प्रियवाक् प्रभावेणैव वनवासदुःखं व्याध्यादिभयञ्चातीत्य राजप्रासादेषु राजदारकै राजदारिकाभिश्चात्यन्तमाद्रियमाणाः, रूपेण तरुणिम्ना नवनवैर्हावभावविलासैश्च सुरपुरी तरुणीरपि विडम्बयन्तीभी राजरमणीभिश्च समुल्लसन्नवपल्लवकोमलिम्ना कलित-ललित-तामरस-कान्तिना स्वकरेण विविधरसं नवनवं भोजनं भोज्यमानाः, स्वयं राजभिरपि च सस्नेहं लाल्यमाना अनुपममानन्दमनुभवन्ति। एवमेव च समानकालिमाकलितौ कोकिल-काकौ समानायामेव शाखायां तिष्ठतः, यावद् वागुच्चारणञ्च न निपुणेनापि विभावयितुं शक्यते तयोर्भेदः। परं वागुच्चारणसमकालमेव कोकिलस्तु सादरं सस्नेहञ्चेक्ष्यते। प्रशस्यते च नितराम्, परमपरः काको वराको यदैवातिपरुषेण कर्णकटुना "कां कां" शब्देन वारं वारं मुखं विदार्य रटितुमारभते तदैव प्रस्तरशकलैः काष्ठगोलकैश्च धाराप्रवाहेण प्रक्षिप्तैस्ताड्यतेतराम्। इत्थमेवान्यदपीतिहासेष्वन्यत्र वाऽनेकधा दृग्विषयतामेति यत् अमुकस्य राज्ञः पुत्रेण दिग्विजये अमुको महाप्रतापो महाभीषणसैन्यशक्तिशाली शत्रुभूपोऽनन्यजितपूर्वोऽपि विजित इति प्रियं झटित्यागत्य केनचित्सेवकेन तस्मै राज्ञे न्यवेदि, तत् प्रियवचनश्रवणनन्दितेन च राज्ञा स प्रभूतं धनं मानञ्च दत्त्वा उच्चतरं पदमारोपितः। अन्यच्च दृष्टं यत् कश्चित् तीव्रक्रोधरक्तेक्षणः खड्गमुद्यम्य सरयं कमपि हन्तु मा पतितः परं प्रियवचनप्रयोगशमितामर्षो

यं स हन्तुमुपस्थित आसीत्तस्यैव सविनयं क्षमाप्रार्थी संवृत्तः। इत्येव मनन्तलाभं प्रियभाषणं कियन्नाम प्रशस्येत।

अतश्चावधृतं भवति यत्—प्रियभाषणेन कश्चिद्व्ययो न भवति, जिह्वा च न घृष्यति, नापि किञ्चिदन्यत् कष्टमापतति, प्रत्युत प्रियवचनवशीभूतैः सर्वकार्येष्वप्रार्थितैरप्यपेक्षितं साहाय्यं विधीयते लोकैः प्रियवादिन इति नात्युक्तं भवति। यतो हि प्रियवचनेऽपूर्वा आकर्षिणी शक्तिर्विद्यते। किञ्च कस्यचिन्मनःखेदनं महत्पापम्, मनस्तोषणञ्च महत्पुण्यं गण्यते। तुष्टमना हि जनः शुभामाशिषं प्रयच्छति हितञ्चेहते तत्तोषिण इति प्रियभाषणेन नात्यन्तं सर्वमनस्तोषोपजननेन पुण्यमपि महद् भवति, तेन च सद्गतिप्राप्तिरिति, प्रियभाषणेऽनन्तलाभपरम्परामनायाससाध्यां वीक्ष्य प्रियवादिनां नास्ति कोऽपि पर इति तु किमेव वक्तव्यमिति सुधिया सर्वदा प्रियवादिना भाव्यमिति सुष्टूक्तम्—

"कः परः प्रियवादिनाम्" ॥

(प्रस्तावप्रभाकरतः)

---

## (२१) "विकार हेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः"।

(ले० प्रोपाध्यायः श्री पं० निगमानन्द शास्त्री हिन्दी प्रभाकरो विद्यालङ्कारः)

[अभिनवया मनोहारिण्या शैल्या प्रस्तोतुं प्रवृत्तः खल्वत्र विद्वान् लेखकः। त्रीन् मूर्धन्यतमान् कामिनी-काञ्चन-मरणरूपान् विकारहेतूनुपन्यस्य तेषु सर्वथाऽविक्रियमाणा एव वस्तुतो भवन्ति धीराः, वास्तविकाधीराः कदापि विक्रियां नो लभन्ते इति धैर्यमहिमानं साधु प्रत्यपादयत्]।

अद्य कस्यापि वस्तुनो योग्याऽयोग्यत्व-निर्णये बहुमतप्राप्तिरेवास्ति दृढं प्रमाणम्। सम्भाव्यते रूसदेशे इव इहापि बहुमत हेतुनैव

मञ्जूरीकृता भविष्यति ईश्वरसत्तापि। ममापि कदाचिद् अनिवार्यतां गतम्—यत् सत्स्वपि असंख्येयेषु धैर्य-विध्वंसकेषु विकारहेतुषु के पुनः सर्वोत्कृष्टा धैर्य-विध्वंसिनो विकारहेतवः ? विषयेऽस्मिन् निस्सङ्कोचं निरुत्कोचं च संगृण्हीयां केषांचिन् महाकवीनां मतानि। श्रूयताम्—पण्डित राजो ब्रूते—

"उपनिषदः परिपीता गीतापि हन्त श्रुतिपथं नीता।
तदपि न सा विधुवदना मानस-सदनाद् बहिर्याति" ॥ इति।

भर्तृहरिरपिमतमेतद् द्रढयति—"कन्दर्प-दर्प-दलने विरला मनुष्याः" इति, एषोऽपरोऽप्यमुमेवार्थमनुमनुते "अपारे खलु संसारे सारं सारङ्ग लोचनाः" इति। अयञ्चापि—"स्त्रीभिः कस्य न खण्डितं भुवि मनः" इति मतं ददाति। उपमापतिः कालिदासस्त्वद्य—

"नागेन्द्रहस्ता स्त्वचिकर्कशत्वादेकान्त-शैत्यात्कदलीविशेषाः।
लब्ध्वा हि लोके परिणाहि रूपं जातास्तदूर्वो रुपमानबाह्याः" ॥

इति वदन् स्वयमपि अनुपमः ( उपमानबाह्यः ) एव जातः। असौ तु एतस्य विरोधं करोति यत्—"अर्थस्य सर्वोदासः" इति। एष च द्वयो स्तौल्यं प्रतिपादयन्नपि—

"वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च।
तासु तेषु च नासक्तः साक्षाद् भर्गो नराकृतिः" ॥ इत्यत्र।

कान्तापदमेव प्रथममुपन्यस्यति। ननु तर्कयामि ममापि मतं श्रोतुमिदानीं श्रीमन्तो भृशमुत्सुकाः स्युः श्रूयताम्—

"परित्यक्तो गेहः समजनि च देहः कृशतरः
मया ज्ञातः पन्था व्रण-कलित-कन्थाप्त-तनुना।
परं नायं वामः कथमपिहि कामो विरमति
अनिर्मूलं मन्ये विपदमनुबध्नन्ति विपदः ॥" इति।

अस्तु एतस्यापि मतं श्रोतुमर्हम्—"संसार ! तव निस्सार ! पदवी न दवीयसी, अन्तराऽन्तरिता न स्याद् यदि रे मदिरेक्षणा"। इति। परमयन्तु काञ्चन-कामिनी-कीर्तिभ्योऽपि मृत्युमेव परं धैर्य-विध्वंसकं मन्यते—

"निन्दन्तु नीति निपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥" इति ।

**एष परिणामः**—साम्प्रतमेतत् निश्चप्रचतां गतम्; यत् मुख्यतः कामिनी, काञ्चनं (धनं), मृत्युश्च धैर्य-विध्वंसकेषु विकारहेतुषु मूर्धन्यतमानि । यश्चैतेषां सन्निधानेऽपि विकृतिमनापन्नस्तिष्ठेत् स एव वास्तविको धीरः, न तु परोक्षमन्मथो मृगशावैः सह वर्धितः परित्यक्त नगरनिवासो दिगम्बरोवनेचरः प्राणी । अपितु--

उद्भट कविता इव पदन्यास-हृदयहारिण्यः, विद्युल्लता इव चाकचक्यकारिण्यः, परेत वनिता इव चक्षुः प्रविष्ट-मूर्ध-विधूनिन्यः, हिमपुत्तलिका इव शीतल-स्पर्शोत्पादित-पुलकावलयः, कोकिल कान्ता इव-कर्णयोरमृतनिश्चोतन्यः, सुधाधारा इव निजास्वाद-विस्मारितान्य संसार-साराः, पुष्पावलय इव किरन्मकरन्द-धाराः, उपवनलता इव दृढाश्लिष्ट-पार्श्वचराः, सिद्धजन-मूर्तय इव सविग्रहमन्तश्चराः, सुचिक्कणमरकत-मणिवेदिका इव स्खलत्पथिक-पादपद्धतयः, मरु मरीचिका इव सतत-संदृश्यमान-स्वसमीप-सान्निध्याः, अथच अधःस्थित-पादारविन्दा अपि अकमलाः, अतिशयस्थूल-रम्भास्तम्भा अपि नैकवारफलदाः, आरूढसिंह-कटयोऽपि अदुर्गाः, वक्षःस्थल-विधृतामृत-कलशा अपि अदिवंगताः, सतत-सन्निहित शुका अपि अखण्डित-बिम्बावलयः, विकसित-कमलावलयोऽपि असरस्यः, शिरःश्रावित-शेषनागा अपि अनागपत्न्यः, पालित-खञ्जना अपि अपक्षि-पालकाः, मस्तकाहृत-मन्मथचापा अपि अरतयः, सरल-तनुयष्टयोऽपि वामाः, एकत्रावस्थित-निर्वैर-सिंह-शुक-नाग-खञ्जना अपि अयोगिन्यः खलु भवन्ति महिलाः । एतासां हि अयत्न-सुलभे दर्शन-स्पर्शनादि लाभे सत्यपि—

अथच अमन्त्र-तन्त्र-वशीकरणे सर्वसुख-साधने धने पुरःस्थेऽपिच-यस्य महिम्ना निरक्षरोपि पण्डितः, अगम्योऽपिगम्यः, निर्गुणोऽपि जेगीयमान-गुणः, शत्रवोऽपि मित्राणि, परेऽपि आत्मीयाः, दूरगा अपि पादा-

नुगाः, । यदर्थं पितरमपि निहन्ति, श्मशानमपि सेवते, अनार्यमप्याचरति अकार्यमपि कुरुते धर्ममपि च दूषयति--

अपि च शिरः समारूढे महानृशंसे मृत्यौ । यश्च न मुञ्चति वृद्धं युवानं बालं वा, न गणयति कार्यशेषताम् राजनिरङ्के च तुल्यमेव व्यवहरति, यद्वशं गतो नरो न पुनरात्मीयानां दर्शनं कर्तुं पारयते, मनस्येव लीयतेऽस्य सङ्कल्पानां शतम्, अगणित-नक्तंदिवाऽऽयास-सञ्चितं धनं तिष्ठत्यत्रैव न याति कियन्त्यपि पदानि सार्धम्, प्राणप्रिया सुखदुःखयोश्छायेवानुगता सहचरी चापि मुञ्चति साहचर्य्यम्, नेत्रे तृषिते इव तिष्ठतः, सङ्कल्पशतैर्वर्धिता औरसाः सूनवोऽपि अन्तिमं स्नापयित्वा गृहान्निस्सारयन्ति, गाढालिंगन-कारिणोऽपि अभिन्नहृदया बान्धवा स्तत्क्षणमेव प्रेतोऽयमिति दूरतः परिहरन्ति, अल्पीयसि दुःखलेशे प्राणदातारोऽपि स्वहस्तेनैव दीपयन्ति चिताम्, हन्त यैः सहगतं मुक्तम् आलपितं क्रीडितम् उषितं ते सर्वेऽपि बहिष्कुर्वन्त्येव, सर्वमेव जायते विपरीतम्, अहो सत्यमुच्यते--

"चेतोहरा युवतयः सुहृदोऽनुकूलाः सद्बान्धवा
भक्ति विनम्र-गिरश्च भृत्याः ।
गर्जन्ति दन्ति-निवहा श्वपचा स्तुरंगाः
सम्मीलने नयनयोर्नहि किञ्चिदस्ति ।।"

यश्चैतेषु धैर्य-विध्वंसकेषु विकारहेतुषु समापतितेषु न कामपि विकृतिमापद्यते विद्यते स एव वास्तविको धीरः इति साधूक्तं कविकुलगुरुणा तत्र भवता कालिदासेन—

"विकार हेतौ सति विक्रियन्ते येषां न
चेतांसि त एव धीराः ।" इति ।



चलायमानता स एव भूकम्पः। अत एव संसारस्य ज्वालामुख-पर्वतानामितस्ततो भूकम्पा अधिका जायन्ते। विज्ञानस्यैते द्वे एव कारणे हिन्दुशास्त्र प्रतिपादितकारणस्य व्याख्यानभूते विद्येते। विज्ञानाऽनुसार-माग्नेयतत्त्वे यदा चञ्चलता भवति तदा भूकम्पो जायते। अधुनाऽस्माभिः पृथिव्या नीचैस्तरङ्गायमाणस्य उष्णस्याऽऽग्नेयतत्त्वस्य यदि कल्पना क्रियेत तदा वयं शोभनं ज्ञास्यामो यत् सहस्रशीर्षपरिमितोऽयं विशाल सर्प एव, को वक्तुं पारयते यदुष्णस्य आग्नेयतत्त्वस्य रूपक एव शेषनागस्य वर्णनं विद्यते विहितम्।

कारणदृष्ट्या परिणामदृष्ट्या च भूकम्पस्याऽपि बह्वो भेदा जायन्ते। पृथिवीडोलो यद्यल्पीयान् स्यात् तदा उपरि-स्थितानां वस्तूनां नकाऽपि हानिर्जायते। अत्युग्रडोलेन पृथिवी अत्यधिकं कम्पते, अग्रतः पश्चात्, पुनश्चाग्रतो भ्रमति। एतेन भवनेषु छेदाः भवन्ति, तदा पृथिवी कम्पमाना स्वस्थानादत्यधिकमुपरिष्टाद् वर्धते। विशालानि भवनानि पतन्ति, नदीनां धाराः परिवर्त्तन्ते, अनेकान्यभूतपूर्वाणि परिवर्तनानि जायन्ते। यत्राऽधस्थमाग्नेयतत्त्वं प्रस्फुटति तत्र पृथिवी विदीर्यते, तत्रस्थं सर्वं विपर्य्येति।

इटली-जापान-ब्रह्मादि-देशा भूकम्पस्य देशा कथ्यन्ते। इटलीदेशे विद्यते आल्पसपर्वतः। यो हि प्रतिदिनं वर्धते। अत्र देशे ज्वालामुखाः पर्वता अपि विद्यन्ते। जापानब्रह्मदेशयोर्ज्वालामुखपर्वतकारणेनैवाऽधिका भूकम्पा जायन्ते। भारते विद्यते हिमालयो यः प्रतिदिनं वर्धते, अत्र विद्यन्ते ज्वालामुखा अपि पर्वताः। अतोऽत्राऽपि प्रायशो भूकम्पा जायन्त एव। "कांगडा"—प्रान्ते ज्वालामुखपर्वतो विद्यते। अयं १९०५ खीष्टाब्दे स्फुटित आसीत्। तेन प्रायश्चत्वारिंशत् सहस्रमानवा मृता आसन्। पञ्चाम्बुप्रान्तस्य केषुचिन्नगरेष्वपि अनेन डोलेन भवनेषु महती हानिः सञ्जाता आसीत्, कतिचन भवनानि विदीर्णान्यभूवन्। एतदनन्तरमेकोनत्रिंशद्वर्षपर्यन्तं न कोऽपि वर्णनीयो भूचालो भारते समजनि। सहसा जनवरी मासस्य १९ तारिकायां १९३४ तम-खीष्टाब्दे मध्याह्नाऽनन्तरं सार्धद्विवादनसमये अखिलमपि उत्तरीयभारतं चकम्पे। अटकतः कटकं यावद् धरातलं कम्पमानमासीत्। बहुस्थान-

भूचालयन्त्राणि भग्नानि सञ्जातानि, एतदासीद् डोलस्य तीव्रतायां प्रमाणम्। विहारप्रान्तस्य षड्मण्डलानि नष्टानि अभूवन्। नयपालेऽपि समभूद् विशेषरूपेण महती हानिः। विहारत उत्तरदिशि भूकम्पस्याऽसीन्महान् प्रभावः। बहवः कूपा निर्जलाः सञ्जाताः। जलपूर्णानि महान्ति सरांसि सर्वथा जलरहितानि संवृत्तानि ज्ञायते स्म यदेषु नासीत्कदापि पयसो नामाऽपि। पृथिवीविदरणेनाऽनल्पीयस्यो वृद्धाकाराः सरस्यः सम्वृत्ताः। बहुत्र यत्र नासीत् सिकताया नामाऽपि, तत्र सिकतैव परितो दृश्यमाना जाता सहस्रशो गृहाः पतिताः "मुंगेरे" "दरभङ्गाया" ञ्चाऽभूतपूर्वा हानिरभूत्। केषुचित् स्थानेषु वाष्पयानस्याऽऽयसमार्गे भूमौ प्रविष्टः। महाभयङ्करस्यास्य भूकम्पस्य हानिः पूर्णापि नाऽभू द्यावत्—

तदैव प्रायोऽस्माद् भूकम्पात् सार्धैकवर्षोऽनन्तरम्, अर्थात्—मई मासस्य २९ तारिकायां १९३६ खीष्टाब्दे रात्रौ त्रिवादनकाले "क्वेटा-नगरं" भूचालेन सर्वथा विनष्टम्। केवलं द्वयोरेव डोलयोः सहस्रशो भवनानि इष्टिकाऽवशेषाणि संवृत्तानि। सप्तमीलेषु एकमपि गृहं नाऽवशिष्टम्। ये तावदवशिष्टास्तेऽप्येवं सञ्जाता अधुनैव पतिष्यन्तीति। सहस्रशो मानवा शयाना एव मृताः। खानकलातस्य परिवारस्तु प्रभुकृपया सर्वथा सुरक्षितोऽतिष्ठत्। मच्छस्टेशनस्य भवनं वक्रतामगमत्। विद्युतस्तन्तवः (तारें) राजमार्गाश्चाऽभज्यन्त। श्रूयते यद् भूचालादेकदिनपूर्वं नगरे एकोऽपि पक्षि नाऽसीत्। सेनास्थानमपि (छावनी) समभूद् हानिग्रस्तम्। "क्वेटा" पूर्वस्य नन्दनं कथ्यते स्म, भूकम्पेनाऽनेन स सर्वथा प्राध्वस्यत। ये जनास्तदा तत्राऽसन्, अद्याऽपि ते स्मारं स्मारं भूकम्पं कम्पन्ते। भूकम्पपीड़ितानां सहायताऽपि शोभनतया नाऽभूत्। सरकारेण नगरं परितः सेना परिवारितं कृतमासीत्। इतर संस्थास्थानाञ्च जनानामासीदन्तर्गमनमवरुद्धम्। स्वयं सरकारेणाऽखिलकार्यसम्पादनस्य चेष्टा कृता। किन्तु साफल्यं नाऽलभ्यत। पृथिव्यन्तर्लीन-सामग्रीजात निष्कासनस्याऽपि नाशक्यत सुप्रबन्धः कर्तुम्।

भूकम्पस्य हानिकारकात् परिणामादात्मानं रक्षितुं जापानदेशे ब्रह्मदेशे च दारुवंशादीना गृहा निर्मीयन्ते। क्वेटानगरेऽप्यधुनैतादृशागृहाः

सज्जी क्रियन्ते, येषु भूकम्पस्य नभविष्यति अधिकः प्रभावः। अस्माकीनेषु ग्राम्येषु पुरातनेषु मृत्तिका निर्मितेषु गृहेष्वपि न भवति भूकम्पस्य प्रभावः। किन्तु साम्प्रतन्तु अस्मभ्यं विशालभवनानि रोचन्ते। अतएव भूकम्पस्य दुष्परिणामानपि वयमेव सहामहे। भूकम्प एवाऽस्त्येकमेतादृशं वस्तु यत्र विज्ञानं प्रकृतिसम्मुखे पराजितं सम्वृत्तम्। विज्ञानस्य पार्श्वेनाऽस्ति कोऽप्युपायोऽस्य प्रतीकाराय। भूकम्पाद् रक्षायाः साधनान्यपि न सन्ति परिपूर्णानि, यतो भूकम्पः स्थानं समयञ्च स्थिरीकृत्यनागच्छति।

( हिन्दी सूर्य-निबन्ध-प्रकाशातोऽनूदितः )

---

## ( २२ ) व्यायामः

### ले० प्रोपाध्यायः श्री पं० उमेशदत्त शास्त्री

'व्यायामः सर्वोत्तमः शरीर-स्वास्थ्यकर उपायः' इति प्रायः सर्वे विदन्त्येव। तद्विषयक एव प्रस्तावोऽयं महता प्रयत्नेन व्यायामस्योपयोगितां प्रतिपादयति परिमार्जितया प्राञ्जलया च गीर्वाणभाषया।

व्यायाम-पुष्ट-गात्रस्य बुद्धिस्तेजो यशो बलम्।
प्रवर्धन्ते मनुष्यस्य तस्माद् व्यायाममाचरेत्॥"

व्यायामो द्वेधो विभक्तोऽस्ति शारीर-मानसभेदात्। धावनसंतरणोत्प्लवनादिकं शारीरो व्यायामः मनन-कल्पन-निदिध्यासनादिकं मानसो व्यायाम उच्यते। किन्त्वद्यत्वे, व्यायामपदेन शारीरस्य श्रमस्य प्रायेण परिग्रहो जायते,। शरीरस्य सुस्थत्वे सति मस्तिष्कस्यापि व्यापारः समीचीनतया परिचलति। किन्तु कायिकं स्वास्थ्यमेकेनैवान्हा नैव सुसंपादमस्ति। एष तावत् सर्वसंमतः सिद्धान्तोऽस्ति यदस्माकं देहस्य क्षयः प्रतिक्षणमेव जायते, अतस्तदीया संपूर्तिरपि अनुक्षणं करणीया। अस्मादेव हेतोः सर्वैः स्वशक्त्यनुसारं नियमतो व्यायामो विधेयः।

नियमाभावे संवृत्ते व्यायामः फलप्रदो नैव भवितुमर्हतीति, सदास्मर्तव्यम्। शयनासनविहारादिषु यथास्माभिर्नियमः प्रकल्पनीयो भवति,

तथैव व्यायामेऽपि नियमस्य महीयसी प्रयोजनीयता वरीवर्त्ति। यथा भोजने दिनद्वयस्य दिवसत्रयस्य वा व्यवधानं स्वास्थ्यं धूलिसात्करोति, यथा वा बहुजागरणमतिशयितं वा शयनं स्वास्थ्यस्योपरि कुठारं पातयति, तथैव कालनियमेन शून्यः कादाचित्को व्यायामः वाञ्छितं न साधयितुं क्षमते, प्रत्युत हानिं जनयति। व्यायामात् न केवलं शरीरमपितु चेतोऽपि स्वास्थ्यमृच्छति। व्यायामतो मनसि स्फूर्तिरुदेति, रोगा दूरतस्तिष्ठन्ति, जीवनं प्रमोदमयं जायते। व्यायामप्रभावेण वयं शरीरावयवानां नीरोगतां संपादयितुं क्षमामहे। व्यायामविधानेन शरीरस्य सर्वेषु भागेषु यथेष्टं रुधिरसंचारो जायते। देहस्य सर्वेऽवयवाः कर्मण्यतां सहिष्णुतामूर्जस्वितां च धारयन्ति। चरणयोर्व्यायामो यदि न विधीयेत तर्हि संचारशक्तेः सर्वथैवाभावः सम्भवति। एवमेव करयोः सामर्थ्यं जनयितुं तदीयो व्यायामो नितरां प्रयोजनीयो भवति। अन्यथा भुजयोर्दौर्बल्यं सम्भाव्यते। जाठरमनलमुद्दीपयितुं व्यायामस्योपासनं परमावश्यकम्। युक्तियुक्तेन व्यायामेनोदरे परिपाकशक्तेः समुन्मेषः संजायते। पाचनशक्तेर्दृढत्वे संजाते सति मानसमपि प्रसीदति। मनः प्रसादेन च सर्वाणि कार्याणि सिध्यन्ति। स्वस्थः स एव यो रोगसंक्रान्तेः शून्यगात्रः सदा स्मेराननः उत्साहसम्पन्नो भवति। इदं स्वास्थ्यं व्यायामायत्तम्। आयुर्वेदशास्त्रे च व्यायामस्य पदे पदे प्रशंसोपलभ्यते। व्यायामशीलोनरोऽगदङ्कारस्य कैङ्कर्य्यात् सर्वथा विमुच्यते।

इह जगति यावन्तो विश्वविख्यातनामधेया महापुरुषा अभूवन्, ते सर्वे व्यायामव्यसनिन आसन्। क्षत्रियवंशधुरन्धरो दिल्लीपतिः श्रीपृथ्वीसिंहः व्यायामस्य परमभक्त आसीत्, प्रत्यहं स व्यायामं विदधे। मृगया प्रसङ्गेन स बहुधा स्वसाम्राज्यसीमामप्यतिचक्राम। हिन्दुकुलकमलदिवाकरो वीरत्वावतारः कीर्तनीयचरितः श्रीराणाप्रतापमहोदयस्तु व्यायामस्य परमरसिकोऽभवत्, तन्महिम्नैव स कपाटवक्षस्कोऽर्गलपीनबाहुः सुदृढ़-कन्धरश्चाभूत्। तस्य चक्षुर्षोर्दुर्दर्शं तेजो व्यायामेनैव समुत्पादितम्। आर्यत्वध्वजोत्तोलनदीक्षितः स्वदेशभक्त-मूर्धन्यो महाराष्ट्रकेशरी शिव-राजोऽपि व्यायामस्य बलेनैव निजकायं स्फूर्त्तेरदम्योत्साहस्य च

जन्मभुवं विदधे। तस्य सर्वे सैनिका अश्वारोहणपरायणा आसन्। भीष्मभीमार्जुनादीनान्तु कथैव का। ते तु व्यायामशक्तेः निदर्शनभूता एवासन्। व्यायामभूमिषु तेषामुदग्रा हुङ्काराः कम्पयन्ति स्म सर्वां धरित्रीम्। इदानीमपि महात्मनां वन्दनीयो गान्धीमहोदयोऽपि स्वकीये आत्मबल-पक्षपातित्वे सत्यपि प्रत्यहं स्वास्थ्यसंपादनाय क्रोशद्वयं ततोऽप्यधिकं वा भ्रमणं पद्भ्यामेव करोति।

व्यायामे संयमस्य महती आवश्यकता विद्यते। तद्विधानेऽतिशयो नैव विधेयः। निजौजसोऽनुकूल एव व्यायामो विधातव्यः। निजां शक्ति-मविचार्य्य ये व्यायामं विदधति, ते स्वं महदनिष्टं कुर्वन्ति, अजकनाशं च नश्यन्ति। अयथाबलमनुष्ठीयमानो व्यायामः मानवं शक्तिविरहितं विदधाति। व्यायामे संयमस्य मात्रायाश्च सविशेषं विचारो विधेयः।

शय्योत्थायं ये कुर्वन्ति व्यायामं ते व्यायामविधिं न विदन्ति। ये च भुक्त्वैव व्यायामे प्रवर्तन्ते तेऽपि मन्दधिय एव। रिक्तोदरेणापि न कर्तव्यो व्यायामः। एवमेव मात्राया अपि विचारः करणीयः। तत्र न्यूनाधिकत्वं नैव विधेयम्। यथा यथाभ्यासो वर्धेत तथा तथैव व्यायामोऽपि वर्धनीयः। अभ्यासशीलः प्रचुरमात्रायां श्रमं कर्तुमर्हति। किन्तु तच्छून्यः स्वल्पमेव कुर्यात्। व्यायामस्यानेकप्रभेदा सन्ति केनापि व्यायामेन सर्वाङ्गीणः श्रमो जायते, यथा वारितरणात् द्वन्द्वयुद्धात्, वृक्षपर्व-ताधिरोहणात्। कोऽपि व्यायामोऽवयवविशेषमेव पुष्टं करोति, यथा हाकी-क्रिकेटादयो लक्ष्यवेधप्रभृतयः, केनापि देहस्य पश्चार्धमेव पुष्टिमाप्नोति, केनापि शेषार्धमेव। एषु व्यायामप्रभेदेषु मानवः स्वरुचिं स्वावश्यकतां च विचार्यैकतममाश्रयेत् सर्वे सर्वप्रकारकं व्यायामं कर्तुं न क्षमन्ते। येऽधिकं व्यायामं कर्तुं न पारयन्ति, तैः केवलं भ्रमणमेवालम्बनीयम्। भ्रमणं हि सर्वोत्कृष्टो व्यायामोऽस्ति। अनेन मनोविकासः शक्त्युपचयः पाचन-सामर्थ्यस्य चोत्कर्षः सम्पाद्यते। नगराद् बहिरुन्मुक्ते समे क्षेत्रे धावनमपि विद्यार्थिनां कृते लाभप्रदमास्ते। दीर्घायुष्यावाप्तये जीवनानन्दानुभूतये च व्यायामात् समीचीनं किमपि साधनं न विद्यते। (निबन्धरचना प्रकाशतः)

# (२३) चन्द्रोपरागः

## ( ले० श्रीमान् श्री पं० हरिदत्तशास्त्री आयुर्वेदाचार्यः )

चन्द्रग्रहणं सूर्यग्रहणं च प्रतिवर्षं द्विस्त्रिर्वा पश्यन्त्येव सर्वे, तत्र को हेतुः, किमिति स्नानदानादि वा कर्तव्यमिति विवदन्ते प्राय आधुनिकाः, निबन्धोऽयं वैज्ञानिकेन प्रकारेण विवादमिमं सर्वथा दूरी करोति, समाधत्ते च आधुनिकीः सर्वाःशङ्काः।

अथेदमामनन्ति सत्यविज्ञानपाणयो जरदन्तवाण्यो यत् पुरा प्रससार सर्वतोमुखी शेमुषी सत्वानां सात्विकानां सत्ये युगे। भ्रश्यति तु कृतयुगे परतः संचयशीलानां साम्पन्निकानां लोभोपहतचेतसामाविरासी-दालस्यम्, यदारभ्य चित्तमालस्याक्रान्तं निमीलितचेष्टं निश्चेष्टमिव न्यरूप्यत गुरुणाऽऽवरकेण तमसा। तमःस्वभावादावरकं गुरु च परि-माणतः। निदर्शनतः स्फुटमुपलभ्यते तमः पृथिव्याम्। "तमो बहुला भूः" इति ह्याचक्षते प्राज्ञाः। "सत्वं लघुप्रकाशकमिष्ट" मित्युक्तं साङ्ख्यैः। तेजोमयं प्रकाशबहुलं सौरमाग्नेयं वा द्रव्यं सात्विकमामनन्ति मुनयः। द्रव्यान्तरोपष्टम्भकं स्वरूपतश्चलं रजो निरूपयन्ति पण्डितरूपाः। रजोगुणमयो वायुर्वेगवान् मध्यगश्चबलः उदाह्रियेत बालेभ्यो रजोरूप-निरूपणे। प्रकाशबहुलंसत्वं प्रायश्चोदूर्ध्वगमेव तत्। रजः सत्वादधस्थं तद् धारकं चालकं स्वतः। तमस्त्वधोगमं प्रायः प्रतीपं च प्रकाशतः। तथा-चाहुः स्म पूर्वे—"ऊर्ध्वंगच्छन्ति सत्वस्थाः मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः।" अत्र सत्वादिषु त्रिषु जघन्यो नीचो गुण स्तमएव तद्वृत्तिस्थास्तामसा अधो गच्छन्तीति। द्योतनाद् देवाः सात्विकाः सत्वमूर्ध्वमस्वभावमवष्टभ्यश्रिताऊर्ध्वलोक-भाजः प्रस्थिताः पौराणिकेषु प्रस्थानेषु।

मननशीलाः मानवाः कर्मप्रचुराः कर्मिणः कर्मलोके स्वभावतश्चले चलनात्मकाः रागरूषितरक्ता राजसाः "क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजेति" मानुषलोकस्य कर्मप्रधानस्य राजसत्वात्। अधःसरणस्वभावा

असुराः पृथिव्यधःपातालवासिनस्तमोमयाः "यूयं प्रयात पाताल" मिति मार्कण्डेये श्रीदेव्युक्तेः। पातालं स्वंलोकमिति यावत्। स्वे एव गृहे निवसन् न निषिध्यते केनाऽपि। स्वगृहावस्थितिः अभीष्टैव प्रत्युत समेषाम् जीवनाधायिका च। अतएव उदासीनाऽपिस्वतः श्रीदेवीनिजगाद शंकरमुखी शुम्भमुखान्—"यूयं प्रयात पातालं यदि जीवितुमिच्छथ" इति पाताल-'मासुर' लोकमेवाभिप्रयन्ती। यद्धि नकथमपि जानाति किञ्चिच्चेष्टते वा तन्मृतमित्युच्यते प्राणिज यच्च जानात्येवपरं नकदाचिन्न जानातीति तदमृतं सजीवमित्याख्यायते सद्भिः। अतएव सत्वप्रचुरं ज्ञानमयं प्रकाशमयं तत्व-ममृतम् यदासाद्य अमराः निर्जराः देवाः। अमृतं देवभोजनम् मृतभोजनं चासुरं तमो बहुलं च। बुद्धिः सत्वमयी प्रकाशबहुला "बुद्धिं लुम्पति यद् द्रव्यंमदकारि तदुच्यते।" तामसं हि तत् यथा मद्यम्। मद्यपो विलुप्तबुद्धि-विवेकः शेते मृत इवेति सिद्धं समेषाम्। तस्माद् विद्यार्थिभिः सत्यं विज्ञान-मानन्दात्मकं च ब्रह्मस्वरूपमेव परिचरद्भिः परिहेयं दूरादेव मदकारि द्रव्यमपि भङ्गादि किमुत मद्यादीति सम्यगवधेयम्।

तत्रेदं व्यवस्थापयामो यत् परमेश्वरः संसारेऽस्मिन् तमो बहुले निम-ग्नान् जीवानुद्दिधीर्षुः प्रकृत्यैव सत्वं बहुलतया समुन्नेतुकामः अन्तरा अन्तरा प्रकाशयति सत्वम् तासु तासु पुण्यवेलासु तेषु तेषु वा तीर्थेषु।

सत्ये हि युगे सत्यप्रियेषु सत्वबहुलेषु जीवेषु नासीदेवावश्यकता तदा तदा बाहुल्येन सत्वसमुद्रेकिसमयसमुत्पत्त्यै यथा कलौ तमःप्रचुरेऽधुना। यतो नहि भवति भास्वद्भानुभासितसर्वदिक्के दिने तमोनिरासाय दीप दर्शने-च्छा कस्यापि। अतः कलावेव केवलं भूयस्तरामपेक्ष्यते तमोनिरोधाय सत्व-समृद्धिबलः कालः। अतएव प्रायः प्रतिवर्षं द्विशस्त्रिशो वा भवति चन्द्र-मसः सूर्यस्य वा उपरागः। सचायं सत्वप्रधानःकालः, तदुपरागदर्शिनां कृते। तथाहि—"तमो बहुला भूः" इति पूर्वमवोचाम, युक्तं चैतत् पार्थिवं हि द्रव्यं तिरोधत्ते तेजः प्रकाशम्। अन्धकारमयी छाया प्रकटयत्यभावं प्रकाशस्य। अतएव तेजोऽभाव एव तमो नातिरिक्त 'दशम' द्रव्यान्तरमिति निश्चिक्यु-र्नैयायिकाः। तत्र तमोबहुलायाः भुवच्छायामेवाऽऽकलय्य निर्मितं तमोमयं लोकमधिष्ठाय तदभिमानी राहुर्नाम ग्रहश्चन्द्रमसं सूर्यं वाऽऽक्रामति।

भगवता करुणामयेन तत्तल्लोकतमोऽपनयनपरेण प्रेरितः तासु तासु भूगोलगतिवशनिर्धारितासु वेलासु ।

यदुक्तमभियुक्ततरैः पौराणिकैः—

"उद्धृत्य पृथिवी छायां निर्मितं मण्डलाकृति ।

राहोस्तदमृतं स्थानं तृतीयं यत्तमोमयम्" इति ।

तथा च—"तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः"

इति वदताऽमरेणापि राहोस्तम इति नाम व्याहृतम् ।

तच्च पार्थिवं समष्टिरूपं तमः परिहरति कंचित्कालमभिव्याप्य परमेश्वरो भगवान् यदा कृपया तदा प्रसरति सत्वबहुलः कालस्तत्रतत्र यत्र यत्रोपरागो लोक्यते लोकैः। अयमाशयः तावन्तं हि कालं चन्द्रमसं सूर्यं वाऽभिव्याप्य तिष्ठति समष्टिरूपं तमः उपरागदर्शनयोग्यदेशीयानां लोकानाम् । तत्र तदानीं समष्टितमसः प्रक्षये यदि व्यष्टिरूपेणाऽपि तमःप्रक्षयः क्रियेत सिद्धं भवेत् समीहितं सात्विकानाम् ।

इदमेवाभिप्रेत्य प्राचीनाः परमाचार्याः प्रथयाञ्चक्रुः परम्पराम्—यदुपरागवेलातः त्रिचतुः प्रहरादर्वागेव भोजनादि न विधेयम् यतः भोजनोत्तरं यावत् सम्यङ् न परिणमति भोजनं तावदालस्यादि समुत्थानदर्शनात् प्रतीयते प्रथिमा तमसः । स्नानञ्च ओजो बलप्रदम् आलस्यश्रमजृम्भाऽऽदि तमः कार्यं निरासि निरीक्ष्यत एव नितरां नित्यनिष्ठैः वरिष्ठैः । अतएव उपराग समकालमेव कृतं स्नानं नितरां तमो निरासीत्युपयुक्ततमम् । एवं किल भोजनपरिहारस्नानविधानाभ्यां शरीरं स्थूलं तमः परिहृतम् किन्तु मानसं सूक्ष्मं तमः कथं परिह्रियेत इत्याकाङ्क्षायां मानसमपि तमः लोभरूपं परिहेयमिति तादात्मिकं दानमेव परं श्रेष्ठं न खलु प्रतिग्रहः कथमपि, प्रत्युत निन्द्यः खलु प्रतिग्रहस्तदानीम् ।

अतएवोपरागकाले दानमेव नाऽऽदानम् विधेयमितियुक्तमुत्पश्यामः । प्रतिग्रह परिग्रह परित्यागेन लघीय एव लोभलोपो लक्ष्येत लाक्षणिकैः । सत्वमयं प्रकाशबहुलं कादाचित्कं दुर्लभं तादृशं समयमवाप्य स्वहिताहितविज्ञानविकसितस्वान्तैः दान्तैः शान्तैः सर्वस्था चरमपुरुषार्थरूपं स्वाभीष्टदेवतास्मरणरूपं परमोपादेयं कर्म प्रकटितसकलशर्मसमाचरणीयं

भवति। अथ च "यज्ञायाऽऽचरतः कर्म समग्रं प्रविलीयत" इति स्वेष्टदेवतोद्देशेन पवित्रद्रव्यत्यागरूपो होमात्मको याग आरभ्यते तदानीम्। चिरचिन्तितं स्वेष्टदेवमन्त्रपुरश्चरणं वा विधीयते सावधानम्।

चिररात्राय अन्धे तमसि मग्नः क्षणमपि प्रकाशबहुलंकालमवाप्य भाग्येन कोनाम मनीषी स्वाभीष्टतमं कर्म नाऽऽरभेत कर्तुं तदानीम्। ग्रहणपरिहारसमयेपि समष्टितमसः पुनरावृत्तौ कथं नु व्यष्टितमसः समृद्धिर्नजायेतेति पुनरपि ग्रहणान्ते स्नानविधानं व्यष्टितमः सङ्कोचकं समुचितमेव साधयन्ति सन्तः। अयमत्राभिसन्धिः—

यत्रस्थैरवलोक्यते ग्रहणं सूर्याचन्द्रमसोः कृतं राहुणा तत्रत्यानामेव समष्टितमस्तावन्तं कालमपहृतं भवतीति नियमेन तत्राधिकारिभिः द्वित्रयामात् प्रागेव विहाय भोजनं विधाय स्नानं व्यष्टिरूपं शारीरं तमोऽपहृत्य दानाऽऽदिभिर्निर्लोमां विधाय मानसींवृत्तिं स्वेष्टदेवतास्मरणादिना विधूय स्वान्तर्ध्वान्तं तमः परतश्च ग्रहणान्ते स्नानेन सङ्कोच्य समायान्तं समष्टि तमः साधनीयं स्वेष्टमिति शुद्धःसत्वोत्तरोऽसौ ग्रहणकाल इति सिद्धः।

भवन्ति चात्र—

"सैंहिकेयः स्मृतो राहुस्तन्माता सिंहिका तु या।
सर्वप्राणि तमोरूपच्छायामादाय केवलम्।
समाकर्षति सा सर्वान् समुद्रतलगाऽप्यहो!
सुग्रीवादुपश्रुत्यैतन् मारुतिर्निजघान ताम्॥
इत्याह सुन्दरेकाण्डे वाल्मीकिर्मुनिसत्तमः।
तमोग्राहि महासत्वं सिंहिका तत्सुतोऽप्ययम्॥
राहुर्नाम तमो रूपः पृथ्वीच्छायाधिकारवान्।
पततीदं यदा चन्द्रे सूर्ये वा पृथिवीतमः॥
शुद्धः सत्वमयः कालस्तदा तत्राऽऽविरस्त्यपि।
स्नानं दानं तथा स्वेष्टदेवध्यानं विधीयताम्॥"
भोजनं शयनं तन्द्रा प्रमादो वा तमोमयः।
दूरादेव परित्याज्यस्तत्र सत्वमभीप्सुभिः॥
पौराणिकमतेनेत्थं कर्म ग्रहण कालिकम्।
शास्त्रानुकूलतर्केण संक्षेपेणोपवर्णितम्॥ इति।

# लघुसिद्धान्तकौमुदी

पं० श्रीविश्वनाथ शास्त्री 'प्रभाकर' प्रिंसिपल, सरस्वती संस्कृत कालिज 'खन्ना

(१) ह्रस्वदीर्घप्लुत भेदों के चक्र (२) आभ्यन्तर और बाह्य प्रयत्नों के दो चित्र (३) सन्धि प्रकरण में मूल के प्रयोगों का सन्धिविच्छेद (४) विशेष प्रयोगों की सिद्धि का प्रकार (५) सूत्रविषयक सुभाषितों का उल्लेख (६) अव्ययों के अर्थ (७) अकर्मक और सकर्मक धातुओं का निर्णय (८) कर्ता और कर्म आदि का उक्त और अनुक्त का विचार (९) कोष्ठक में प्रथम मध्यम और उत्तम पुरुष का विचार (१०) चित्र में परस्मैपद और आत्मनेपद की व्यवस्था (११) चक्र में धातुओं के अनुबन्ध की इत्संज्ञा का फल (१२) धातुओं के मूल में न दिये गये रूपों के विशेष उच्चारण और उनकी सिद्धी (१३) सब सूत्रों के हिन्दी में अर्थ। इनके अतिरिक्त परिशिष्ट में (१४) लिङ्ग के बोध के लिये लघुलिङ्गानुशासन (१५) व्याकरण, सूत्र, वार्त्तिक, भाष्य और व्याख्यान के लक्षण और उदाहरण (१६) व्याकरण के चार अनुबन्ध, पांच सन्धियों का, विवरण (१७) विद्यार्थी के लिये लेखोपयोगी नियम और चिह्न (१८) प्रायः अनुवाद में होने वाली अशुद्धियों और उनका संशोधन (१९) अनुवाद के लिये उपसर्ग साथ लग जाने से धातुओं का अर्थ भेद भावार्थ सहित (२०) लघुकौमुदी के मूल तथा टिप्पणी में आए हुए समस्त प्रयोगों का संग्रह तथा उनका हिन्दी भाषा में अर्थ (२१) अव्यय, धातु-पाठ और उनका हिन्दी भाषा में अर्थ, आदि अनेक विशेषताओं से युक्त।

इस आवृत्ति में भाषा टीका, तथा काशी, बिहार और पंजाब की परीक्षाओं के प्रश्नपत्र भी साथ दे दिये हैं। इन उपरोक्त विशेषताओं के पढ़ते ही आप स्वयं ही अनुभव करेंगे कि पुस्तक छात्रों के लिये कितनी अधिक उपयोगी हो सकती है। नया संस्करण मोटे अक्षरों में ग्लेज कागज बढ़िया छपा है। मूल्य केवल २) परन्तु छात्रों को कमीशन काटकर १॥) में दिया जाता है।

प्रकाशक

**मोतीलाल बनारसीदास**

पोस्ट बक्स ७५, नेपालीखपरा, बनारस।